श्रीः

# लक्ष्मीश्वरी चरितम्

विविधविरुदावली विराजमान मान्योन्नत
मिथिलामही महाराज लक्ष्मीश्वर सिंह
( बहादुर जी.सी.आइ.ई. ) देवदेवानां
द्वितीय धर्मपत्न्या महाराज्ञीपदालङ्कृतायाः
श्री ५ लक्ष्मीश्वरी देव्याः कुल
गुणचरितैरुपस्कृतम्
आख्यायिकारूपं गद्यकाव्यम् ।

राजकीय संस्कृत महाविद्यालय ( गवर्नमेण्ट
संस्कृत कालेज ) ऽध्यापकेन, मैथिलेन
मिश्रोपनाम्ना, श्रीबालकृष्ण
शर्मणा निर्मितम् ।
तेनैव कृतया टीकया टिप्पण्या चोपबृंहितम् ।

दरभङ्गा राजधान्यां
कन्हैयालाल कृष्णदासस्य
"श्रीरमेश्वर" मुद्रणालये
श्रीशुकदेवशर्म द्वारा मुद्रापयित्वा प्रकाशितं च
शाके १८४३ । १९२१ ई० ।

# भूमिका



कैलासकाम्रकान्ताशान्त विश्रान्त कीर्तिकलाकलापसन्ततानन्तत-न्त्रापरतन्त्रातिरुच्चिराचरणचणसुचिरचिन्तनीयचरण म. म. चित्रधर मिश्र महाशयानां तेषा मुत्साहनेन निर्मायमया महाराज्ञ्यास्सकल सेव्याङ्घ्रिसारसाया श्री ५ लक्ष्मीश्वरीदेव्या विशदद्रव्यै र्द्रागेव मुद्रापणेन समेषामन्तिके मनीषिणां समुन्मीलितमिदं लक्ष्मीश्वरी चरित नामधेयं गद्यकाव्यम् । येषां स्वरचिते जीवनचरिते श्लोकः

" साक्ष्यं नक्वचिदप्यदायिनृपतेः कार्यालये, वादिता नाभायि, प्रतिवादिताऽपिचमया केनाऽपिसार्धंतथा । लोभौघेनच नान्वभावि पतनक्लेशोर्थिता सङ्कट नोवा कामशराहतेन शरणं प्रापादि वामापरा ॥ "

हन्त हन्त ! ! ! मम मन्दभागधेयतया नाधुना महाशयन्तिते धरणीतलम् । यद्यपि काव्यमेतद्भारतीव्रतविपाक भारतेश्वरस्थापित विहारोत्कलदेशीय शास्त्रविचार समितौ समर्पितं, तन्नादेशितै र्भुतद कलितदोषभेदिदर्पै र्दूरदर्शिदलैः कृतदशा परीक्षणेन प्रथमकक्षायां सत्स्वपि परेषां विदुषां निबन्धनिवहेषु समुत्तारितं; तदुचित महाव-सनस्वरूपं ( दोसाला ) पारितोषिकं समितेरधिपतेः प्रथितस्थितेः मिथिलाचलानायकस्य महाराजाधिराज श्री ५ रमेश्वरसिंह ( बहादुर जी. सी. आइ. ई. के. वी. ई. ) महाशयस्य शय किसकयसकाशा दासादितवदपि, व्या. न्या. मी. तीर्थ साङ्ख्योपाध्याय व्याकरणा चार्य श्री ५ रमेश्वरलता विद्यालया ध्यापक स्पृहणीयाप्रतिमप्रति

भासनाथ श्री रविनाथ ( झा ) शर्म महानुभावै रपरैरपि पण्डितप्रवरैः परिविलोकनेन याचितमपि मुद्रणे कृतौ मुजफ्फरपुर राजकीय महा पाठशालाया मध्यापनस्य परवशतया मया कदाचिदित्थंकृत्य विलस्यमान मानसत्वेन कदाचिदसीमशीघ्रता विवशीकृतत्वेन, कदाचिदधिपद्धति विधेःप्रातिकूल्या दाधारपत्रपतनेन, कदाचिदनवधानेन संशोधनकर्मेतां यथासमुचितं नेतुं नापारि । तथापि प्रकृति सुहृदः सदयहृदयाः सहृदयाः संशोधयन्तु स्वयमेवान्तपर्यन्तं सकृदपिदृष्टिदानेन मदीयं श्रमद्रुमं सफलयिष्यन्तीत्याशास्यते, उपकृतिश्चोक्तमहानुभावानां माजन्म न विस्मरिष्यते इत्यलम् ।

बालकृष्णमिश्रः



# समर्प्पणम् !

---

तदेतन्नव्यकाव्यकुसुमं विविधविरुदावलीविराजमान मनोन्नत महाराजाधिराज लक्ष्मीश्वर सिंह (बहादुर जी. सी. आइ. ई.) कनिष्ठ धर्मपत्न्याः प्रतीत सुकृत कीर्तें श्री ५ लक्ष्मीश्वरी देव्याः पादयोर्मया समर्प्यते, प्रार्थ्यते च तदीय मङ्गल मनङ्गाशतिरिति ।

बालकृष्णमिश्रस्य





* श्रीः *

## लक्ष्मीश्वरीचरितस्य प्रधान विषयाणां सूचीपत्रम् ।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| प्रथमोच्छ्वासे— | |
| मङ्गलाचरणम् | |
| प्राचीनकवीनां वर्णनम् | १६ |
| सज्जनस्य ,, | २३ |
| दुर्जनवृत्तिकीर्तनम् | ३१ |
| कविवंशादिवर्णनम् | ३३ |
| अत्रप्रसङ्गे श्री५ रमेश्वरसिंहस्य वर्णनम् | ५० |
| भारतेश्वरस्य ,, | ५६ |
| श्री लक्ष्मीश्वरीदेव्याः ,, | ६३ |
| गोविन्द ठक्कुरस्य ,, | ६६ |
| एतत्प्रसङ्गे मिथिलायाः ,, | ८५ |
| ,, जगन्नाथस्य ,, | ९३ |
| ,, अरण्यान्याः ,, | ९८ |
| ,, सन्ध्यायाः ,, | १०० |
| ,, मध्यरात्रप्रभातयोः ,, | १०१ |
| ,, कालसर्पस्य ,, | १०३ |
| ,, हयग्रीवस्य ,, | १०५ |
| द्वितीयोच्छ्वासे—— | |
| ,, शिशिरस्य वर्णनम् | १०७ |
| ,, पुरस्य ,, | १०९ |
| ,, दाक्षिणक्षितिपस्य ,, | ,, |
| ,, सन्ध्यायाः ,, | ,, |
| ,, उपवनस्य ,, | ,, |
| ,, उपवनपालगोविन्दयो रसमालापस्य ,, | ११२ |
| ,, श्रीहर्षस्य ,, | ११५ |
| ,, शोकस्य ,, | ११६ |
| ,, निर्वेदस्य ,, | ११३ |
| ,, उत्कलदेशस्य ,, | ११९ |
| ,, राजगृहेगोविन्दगमनस्य,, | १२ |
| ,, प्रभातस्य | १३२ |
| राजगोविन्दालापयोः ,, | ०१२३ |
| तृतीयोच्छ्वासे | |
| ,, सन्ध्यायावर्णनम् | १३६ |
| ,, प्रभातस्य ,, | १३७ |
| ,, कृष्णस्य ,, | १३८ |
| ,, जगन्नाथपुर्याः ,, | १४१ |
| ,, भुवनेश्वरस्य ,, | १४५ |
| ,, सन्ध्यायाः ,, | १४६ |
| ,, गोविन्दतनयानाम्,, | १४८ |
| ,, वसन्तस्य ,, | १[illegible]१ |

पृष्ठाङ्काः

,, प्रभातस्य ,, १५५
,, कौशिक्याः ,, १५६
,, वङ्गनगरस्य ,, १५७
,, तारामन्दिरस्य ,, १६०
,, देवनाथोपाध्यायनस्य , १६१
,, प्रभातस्य ,, १६३
,, कामाख्यायाः ,, १६४
,, ग्रीष्मस्य ,, १६६
,, विद्यापतिसन्ततीनाम् ,, १७०
,, जन्मभृति परिणयं-
यावत् श्री ३ लक्ष्मीश्वरी-
देव्याः , १७१

पृष्ठाङ्काः

पञ्चमोच्छ्वासे

महाराज महेशठक्कुरस्य
वर्णनम् १७७
,, गोपालठक्कुरादीनाम् ,, १८०
,, माधवसिंहस्य ,, १८३
,, छत्रसिंहस्य ,, १८६
,, रुद्रसिंहस्य ,, १८७
,, महेश्वरसिंहस्य ,, १८९
,, लक्ष्मीश्वरसिंहस्य ,, १९०
,, श्री० रमेश्वरसिंहस्य ,, २०२
श्री ३ लक्ष्मीश्वरीप्रियप्रणयस्य ,,

षष्ठोच्छ्वासे

श्री ३ लक्ष्मीश्वरीदेव्या वर्णनम्

## लक्ष्मीश्वरीचरित टीकायां समासतो विस्तरतो वा निरूपितानां मूलव्याख्यानानुषङ्गि कतिपय विषयाणां सूचीपत्रम् ।


| | |
|---|---|
| चर्वणा | परिच्छिन्नत्वम् |
| रतिः | न कर्मधारयादित्याद्यनु- |
| स्थायिभावः | शासनम् |
| अपुष्टार्थता | धर्मितावच्छेदकेऽन्वयः |
| परिकरः | अनुप्रासदूषणम् |
| काव्यलिङ्गम् | अनुप्रासस्य लक्षणम् |
| संसृष्टिः | रसः |
| लक्षकप्रयोगोपवयकता | वृत्त्यनुप्रासस्य लक्षणम् |
| संलक्ष्यक्रमध्वनिः | श्रुत्यनुप्रासस्य ,, |
| ध्वनिसङ्करः | अन्त्यानुप्रासस्य ,, |
| सादृश्यम् | माधुर्यस्य |
| आक्षेपः | प्रसादस्य ,, |
| रुपकातिशयोक्तिः | गुणस्य |
| मङ्गलम् | युक्तिः |
| आर्थव्यञ्जना | रीतिः |
| उत्तमं काव्यम् | गीतिका |
| मध्यमं ,, | मगणः |
| अधमं ,, | रूपकम् |
| भावः | परिणामः |
| वात्सल्यम् | वाच्यावस्तूत्प्रेक्षा |
| समाप्तपुनरात्तता | सन्देहः |
| जडत्वम् | विरोधाभासध्वनिः |

इन्द्रवज्रा
उपमायां न्यूनपदत्वम्
,, बिम्बप्रतिबिम्ब भावः
उपमालक्षणम्
रसवदलङ्कारः
ओजः
पृथ्वीवृत्तम्
आख्यायिका
कथा
वक्त्रम्
अपरवक्त्रकम्
वैतालीयम्
पुष्पिताग्रा
श्लेषोपमा
शब्दभानम्
श्लिष्टपरम्परितरूपकम्
शक्तिः
प्रतिभा
समस्त वस्तु विषयसावयवरूपकम्
यत्तदोः साकाङ्क्षत्वम्
वसन्ततिलका
दोषलक्षणम्
उद्गीतिका
अविद्या
ब्रह्म
ईश्वरः
जीवः
अद्वैतम्
भेद भेदः
भेद खण्डनम्
चैतन्यम्
मुक्तिः
ब्रह्मनित्यता
ब्रह्मकारणता
परिणामः
विवर्त्तः
दुःखम्
श्रवणादिविधिः
श्रुतिस्मृतिविरोधः
ब्रह्मणः आनन्दात्मकत्वम्
अन्तः करणम्
गाधात्वर्थः
अभेदान्वयबोधः
विधेयांशेऽधिकावगाही-
शाब्दबोधः
कथितपदत्वम्
मत
सृष्टिः
पञ्चीकरणम्
परमाणो निरासः
अवयवा वयवि भावस्य ,,
मोक्षनित्यता
तार्किकसम्मतिनिरासः

दृश्यत्वम्
काव्यलक्षणम्
दर्पणकारमतनिरासः
विदेहः
समाधिः
ममता
परिकराङ्कुरः
अर्थान्तरसङ्क्रमितवाच्यध्वनिः
प्रस्तुताङ्कुरः
शार्दूल विक्रीडितम्
गणः
श्रोत्रियः
मनोऽकलुषता
यमकम्
ईश्वरेतर्कः
आहतविसर्गता
विभावना
आयुः
दीपकम्
अतिशयोक्तिः
कविसमयः
पुनरुक्तवदाभासः
उदात्तम्
व्यापारः
स्रग्धरा
अवधिः
पदसंदिग्धत्वम्
न्यूनत्वम्
शमः
सुन्दरीवृत्तम्
प्रेयोऽलङ्कारः
वंशस्थम्
अपवादशास्त्रम्
मोक्षोपयोगिपदार्थः
देवताकृतिखण्डनम्
मूलप्रकृतिः
योगान्तरायः
जातिखण्डनम्
संख्यान्वयः
अभिधामूलव्यञ्जना
आगमविरोधपरिहारः
व्यङ्ग्यत्व नियामकम्
परमाणुस्वरूपम्
वितण्डा
विधिः
शाब्दक्रमदौर्बल्यम्
आधेयशक्तिः
नेयार्थता
कर्मणो ज्ञाननाश्यता
अवधारणज्ञानम्
भग्नप्रक्रमता
साहित्ये लक्षणा

अग्निः
ब्राह्मणस्य मद्यनिषेधः
,, विजया निषेधः
उल्लेखः
साङ्कर्य्यम्
गोत्रस्खलनम्
केन्द्रस्थानम्
उच्चनीचस्थानम्
बाहुलकम्
वाचिकजपः
षट्कर्म
महायज्ञपञ्चकम्
परिणाम भेदः
अनिर्वचनीयः जगत्
अप्रस्तुतप्रशंसा
अगदध्यासः
ब्रह्मणोऽविद्याश्रयत्वम्
"अवाङ्मनसगोचरं मनसैवा
नुद्रष्टव्यमित्येतयो र्विरोध-
परिहारः
ईशाङ्गषट्कम्
शुक्रस्तम्भोपायः
चूलिका
ग्रहमैत्री
संशयात्मिकानुमितिः
शून्यवादः

विषयाणांसङ्कलनेन संख्या १७१
एतेषु कतिपये विषया अनेकेषु
स्थलेषुविभिन्नप्रकारेण प्रतिपादिताः

श्रीः।

# लक्ष्मीश्वरीचरित टीका टिप्पणी प्रतिपादितानां ग्रन्थानां नामधेयानि।

## ( व्याकरणेषु )

पाणिनि सूत्रम् १
कात्यायन वार्तिकम् २
महाभाष्यम् ३

## ( कोशेषु )

नाम लिङ्गानुशासनम् १
मेदिनी २
विश्वप्रकाशः ३
हेमचन्द्राभिधानम् ४
शब्दकल्पद्रुमः ५
शब्दार्णवः ६
शब्दरत्नावली ७
लघुरत्नम् ८
अनेकार्थध्वनिमञ्जरी ९
एकाक्षरकोशः १०

## ( छन्दस्सु )

पिङ्गलसूत्रम् १
वृत्तरत्नाकरः २
छन्दोमञ्जरी ३
वाणीभूषणम् ४
वृत्तरत्नाकरस्य नारायणीयव्याख्या ५
वृत्तदर्पणः ६

## ( कामशास्त्रेषु )

कामसूत्र भाष्यम् १
रतिरहस्यम् २

## ( अलङ्कारेषु )

काव्यप्रकाशः १
साहित्यदर्पणः २
रसगंगाधरः ३
दशरूपकम् ४
काव्यप्रदीपः ५
चन्द्रालोकः ६
कुवलयानन्दः ७
वामनसूत्रम् ८
वामनसूत्रवृत्तिः ९
अलङ्कारसर्वस्वम् १०
साहित्यसारः ११
काव्यादर्शः १२
काव्यादर्शविवृतिः १३
काव्यप्रदीपोद्योतः १४
रसगंगाधरमर्मप्रकाशिका १५
शाकुन्तलार्थद्योतनिका १६

## ( काव्येषु )

वाल्मीकीयरामायणम् १
लक्ष्मीसहस्रम् २

किरातार्जुनीयम् ३
मेघदूतम् ४
गीतगोविन्दम् ५
वासवदत्ता ६
हर्षचरितम् ७
कादम्बरी ८
पारिजातहरणनाटकम् ९
शकुन्तलानाटकम् १०

( वेदेषु )

यजुर्वेदः [ पुरुषसूक्तम् ] १
कठः २
मुण्डकम् ३
बृहदारण्यकम् ४
श्वेताश्वतरः ५
छान्दोग्यम् ६
तैत्तिरीयम् ७
ईशः ८

( कल्पसूत्रेषु )

पारस्करगृह्यसूत्रम् १

( पुराणेषु )

मार्कण्डेयपुराणम् १
मीनपुराणम् २
श्रीमद्भागवतम् ३
आग्नेयपुराणम् ४

भगवद्गीता ५

( धर्म शास्त्रेषु )

स्मृतिदीपिका १
तन्त्रवेदाधिकारि निर्णयः २

( तन्त्रेषु )

स्वतन्त्रः १
तारापारिजातः २
ब्रह्मसंहिता ३
नीलः ४
समयाचारः ५
भावचूडामणिः ६
कुलार्णवः ७
मेरुः ८
अगस्त्यसंहिता ९
बृहच्छ्रीक्रमसंहिता १०
महाकालसंहिता ११
भैरवः १२
ताराभक्तिसुधार्णवः १३

( दर्शन शास्त्रेषु )

न्याय सूत्रम् १
न्याय वार्त्तिकम् २
न्यायकन्दली ३
पदवाक्यरत्नाकरः ४

व्युत्पत्तिवादः ५
शब्दशक्तिप्रकाशिका ६
मुक्तिवादः ७
प्रमाण्यवादमणिदीधिति-
विवृतिः ८
सत्प्रतिपक्षदीधितिः ९
न्यायसूत्रवृत्तितात्पर्य्य-
विवृतिः १०
मीमांसासूत्रम् ११
अधिकरणमाला १२
न्यायप्रकाशः १३
साङ्ख्य सूत्रम् १४
साङ्ख्य भाष्यम् १५
साङ्ख्यतत्त्वकौमुदी १६
योगसूत्रम् १७
वेदान्तसूत्रम् १८
शारीरक भाष्यम् १९
भामती २०
पञ्चपादिकाविवरणम् २१
संक्षेप शारीरकम् २२
अद्वैतसिद्धिः २३
खण्डनखाद्यम् २४
चित्सुखीयम् २५
सिद्धान्तलेशः २६
वेदान्तपरिभाषा २७
पञ्चदशी २८

( ज्योतिषशास्त्रेषु )

ज्योतिषसारः १
सामुद्रिकम् २

सङ्कलनेन ग्रन्थानां संख्या १०६

श्रीगणेशायनमः ।

# * श्रीलक्ष्मीश्वरी चरितम् *

## मङ्गलाचरणम्

गुञ्जदलिमञ्जुवञ्जुल यमुनाकुञ्जे किमपि तिमिरपुञ्जम् ।
जयति समभासि ललितं हरिदम्बरशोभिचपलयाऽऽमिलितम्
॥ १ ॥

टीका ।

पदाम्भोजप्रान्तप्रणतहरिमाणिक्यमुकुट
स्फुटोद्यच्छुभ्रांशुप्रमुदितचकोराक्षियुगला ॥
श्रियं लावण्याब्धिस्मरविहितनिर्मन्थनभवां
दधाना श्रीराधा मम विविधबाधां तिरयतु ॥ १ ॥
नैषा दर्शनसाहित्यदर्पाद्व्याख्या विधीयते ।
परन्तु कुङ्कुमामोदो गवाज्येनैव दीप्यते ॥ २ ॥
वितथोक्तिमयीभूतिः परेषां कीर्त्तिदर्पणे !
नैव निक्षेपणीयेति प्रार्थना मात्सरे गणे ॥ ३ ॥

प्रारिप्सित समज्ञार्था[१]द्यनेकार्थक काव्यविशेष वक्ष्यमाणलक्षण लक्ष्मीश्वरीचरिताख्याप्रख्याताख्यायिका समाप्तिसपत्नसन्दिह्यमानान्तरायसन्तति शान्तिकामस्वान्तेनातन्यमानानि स्तवात्ममङ्गलानि स्वान्तेवासिना मनुशास

(१) आद्यमर्थपदं निस्वनस्य, द्वितीयम प्रयोजनस्य बोधकम् । आदिना व्यवहारज्ञानादीनांपरिग्रहः तदुक्तं काव्यप्रकाशे "काव्यंयशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतय,, इत्यादिना।

नाय निवन्धावयवयति गुञ्जदित्यादि । गुञ्जद्भिर्मधुपैः कलिते मनोरमे यमुनाकूलवर्तिनि वेतसानां कुञ्जे प्रथिततमः पुञ्जापेक्षयाविलक्षणं तमः पुञ्जं श्यामलत्वात्कुञ्जाश्रितत्वाच्च तत्त्वेनाध्यवसिता श्रीकृष्णमूर्ति—रुत्कृष्ट तया वर्तते । कथङ्कारं तद्विलक्षण मित्याकाङ्क्षायां व्यतिरेकपोषकं विशेषण त्रितयमाह समभासीत्यादि । सकलभासनानुकूलशक्तिमदीप्सितं हरिदम्बर शोभिन्या चपलया कान्त्या चाञ्चल्येन च तत्त्वेनाध्यवसितया श्रीराधिकादीनां कयाचिदेकया गोपाङ्गनया समन्तात्सङ्गतं गाढमालिङ्गित मिति यावत् । नचेदृशं तमः पुञ्जं, तद्धि सकलस्यावरकतया प्रतिभासे परिपन्थि भूतं, ललितव्यतिरिच्यमानञ्च । किञ्च चपलाया स्तेजः प्रभेदतया तमसश्च तन्मुखाभावरूपस्य पुञ्जमशक्यमेव तया मिलितुमपि,किमुता मिलिंतु विरोधात् । हरिदाकाशस्य स्वतस्सिद्धत्व कविप्रौढोक्तिसिद्धत्वयोरयोगेनानुपाख्यभावात् तदधिकरणकशोभाश्रयताया हरिद्वसनहेतुक शोभाश्रय तायाश्च विरहाचपलापीयं चित्रैवेत्यर्थः । अत्र तिमिरपुञ्जनिगीर्णस्वरूपेण श्रीकृष्णेनालम्बनेन(१) चपलापदाभिव्यङ्ग्यशङ्कया सञ्चारिणा(२)मञ्जुना वञ्जुलकुञ्जेनोद्दीपनेनालिङ्ग(३)नात्ममिलनेनानुभावेन(४)चर्वणा परपर्यायव्यक्तिविषयीकृतायां कान्त्यादिमत्त्वयोपमानभूतचपलात्वेननिगीर्णस्वरूप श्रीराधिकाद्येकश्रितायां चित्तवृत्तिविशेषप्रीतिरूपायां रतौ साक्षात् विकचप्रसूनसमृद्धिध्वननेनपरम्परयाप्युद्दीपकतया सजातीयविजातीयातिरस्कृत रसावच्छेदककालोपाधिव्यापक धारावाहिकाभिव्यक्तिगोचर

---

२ विषयविधयाकारणेन ।

२ रत्यादीनां स्वेदस्तम्भादिसात्त्विकभावेषु अनुभावान्तर्गतेषु जनयितव्येषु सहकारिणा ।

३ उत्कर्षाधायकेन



४ वाङ्मनोबुद्धिशरीरारम्भरूपेण निरुक्तभावकटाक्षभुजक्षेप लीला विलासादिहावादिना ।

वास(१)नात्मक स्थायिभाव नव[२]कान्यतम निरुक्तरतिगमकसुरतयोग्यता द्योतक तदीयकलविशेषाभिभावकत्वव्यञ्जकतयो–भयथामञ्जुतोपकारितया च गुञ्जदलित्व विशेषणस्य विवक्षितार्थ[३]वाधप्रयोजकानुपादानत्वेननापुष्टार्थता । अतएव प्रकृतार्थोपपादकचमत्कारिव्यङ्ग्यकत्वानुमिति करणत्व सामान्यविशेषभावानालिङ्गित (४) प्रकृतार्थनिश्चयजनकज्ञानगोचरत्वरूपयोः परिकर(५)काव्यलिङ्गयो रर्थालङ्कारमात्रयोः "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः। असत्पुरुषसेवेव दृष्टिर्विफलतां गतेत्यादावुत्प्रेक्षोपमयोरिव परस्परनैरपेक्ष्येण तिलतण्डुलन्यायात् संसृष्टिः "सैषा संसृष्टिरेतेषां भेदेन यदिहस्थिति,, रितिकाव्यप्रकाशोक्तेः । यद्यपि गुञ्जदलित्वमेवाभिव्यञ्जयितुं प्रभवति मञ्जुतां, तथापीतरथापि तत्प्रत्यायनाय मञ्जुपदोपादानम् । वञ्जुलकुञ्जरयातिसान्द्रतया परदर्शनायोग्यत्वं ध्वन्यते तेनच रहःकेलिक्षमत्वम् । अत्रादिमावाच्यार्थमूला पराच व्यङ्ग्यार्थमूला व्यञ्जनावोधया " सर्वेषांमायशोऽर्थानां व्यञ्जकत्वमपीष्यत " इति दर्पणाभिधानात् । यमुनापदप्रतिपादित एव व्यक्ति(६)वृत्तिवलेन वाच्यार्थ

---

१ संस्कारः पूतन्नये निश्चयस्येवेच्छायाअपि संस्कारजनकत्वम् तदवच्छेदके विशेष्यभागस्यानिवेशात् ।

२ रतिरुत्साहश्शोको विस्मयोहासो भयं जुगुप्सा क्रोध निर्वेद इति ।

३ अन्नार्थत्वं वाच्यलक्ष्यव्यङ्ग्य साधारणम् ।

४ अनुमानार्थान्तरन्यासवारणायानालिंगितान्तविशेषणम् । न च पञ्चम्यादिप्रतिपादितहेतुत्वे व्यज्यमानहेतुत्वविरहिण्यसुन्दरेहेतावति व्याप्तिस्तादृशगोचरत्वेन शब्दावोधितत्वस्य निवेश्यत्वात् ।

५ नचापुष्टार्थस्याभावेन शक्यते परिकरश्चरितार्थयितुं, यमकादावपुष्टार्थताया दोषत्वविरहेण साभिप्राय विशेषणे "वनवताऽनवताकिमहिद्रुहेत्यादौ तदुपगमस्यावश्यकत्वात् ।

६ व्याप्तिः व्यञ्जना ।

प्रवाहतादात्म्यमतिक्रोड़ीकृते तदीयतीरे(१)प्रतिपिपादयिषितस्य शैत्यात्म प्रयोजनस्यात्यन्ततिरस्कृतवाच्यध्वनितया तेनच सौरतश्रमापनोदनयोग्यता, तथापि च रहःकेलिक्षमत्व मर्थशक्तिमूलक संलक्ष्य क्रम(२)तयाव्यज्यते, पदेनसम मन्वय व्यतिरेकयोरभावात् । एतच्च स्थायिभावाङ्गतया गुणीभूतं नीरक्षीरन्यायेन ध्वनिसङ्कीर्णतामाश्रयति "संकरेण त्रिरूपेण संसृष्ट्या चैक रूपया वेदखाब्धिवियच्चन्द्रा,, इतिध्वनिभेदप्रकरणे प्रकाशाभिधानात् । किमपीत्यनेन प्रसिद्धतमः पुञ्जापेक्षया व्यतिरेकालङ्कारो बोध्यते, कुञ्जगतत्व साधारणधर्मसद्भावेन शाब्दत्वार्थत्वयोरभावेऽप्यालङ्कारिकाभ्युपगतातिरिक्तपदार्थत्वस्य सादृश्यस्य(३) "कतिपयदिवसविलासं नित्य सुखासङ्गमङ्गलसवित्री । खर्वयति स्वर्वासं गीर्वाणधुनीतटस्थितिर्नितरामिति रसगङ्गाधरोक्ते व्यतिरेकोदाहरणइवेहापिव्यङ्ग्यत्वापरपर्यायाक्षिप्तत्व सत्त्वात् । तिमिरपुञ्जमित्यत्र चपलयेत्यत्र चानुग्राहकस्यनिगरणान्तरस्याभावान्निरवयवा रूपकातिशयोक्तिस्सङ्कीर्यते पुराभिहिताभ्यामलङ्काराभ्याम्, साच विषयिवाचकपदज्ञानमात्रकरणकं तदीयवाच्यतावच्छेदकरूपेण विषयस्य बोधनम् । जयतीत्यनेन वर्तमानकालिकोत्कर्षाभिधानात् तत्प्रकारकज्ञानानुकूलस्यैतस्य स्तुतिरूपतया मङ्गलत्वमवसेयम् । ननु गुरुकार्यारम्भे प्रणतिरवश्यं दृश्यते प्रेक्षावताम् अभिहितं च श्रीधराचार्यैः प्रशस्तपादभाष्यविवरणे न्यायकन्दल्यां "नहिकश्चिदपरः प्रेक्षावान् म्लेच्छोऽपि तावत्कार्ये प्रवर्तते यावदिष्टान् न नमस्यतीति, तथा च स्तुतिमात्रमाचरन्नेपकविः

---

(१) यद्वा शक्यतावच्छेदकरूपेणैवलक्ष्यार्थभानं तावताऽपि गङ्गातीरेघोषइतिप्रयोक्तव्ये गङ्गायांघोष इति प्रयोगप्रयोजनं सात्स्यति ।

(२) विज्ञेयपौर्वापर्येण ।



(३) एतेनन्यायदर्शनानुमता सादृश्यस्य साधारणधर्मात्मिता परास्ता ।

कथमिव नवाच्योभवेदितिचेत् । न,जयत्यर्थेनैव वक्तृविषयवैलक्षण्यसहकारेण भगवद्विषयकप्रणतेस्सद्वासना(१)नामभिव्यञ्जनात्, अतएव जयत्विति नाभ्यधायि, तथासति विधिनोत्कर्षस्यानिष्पन्नत्वध्वननेन नमस्कारद्योतकत्वं नोपपद्येत । इयमे(२)वार्थी व्यञ्जना यदाह मम्मटः "वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् योऽर्थस्यान्यार्थधीहेतु र्व्यापारोव्यक्तिरेवसा,, इति । अनयैवदिशाऽग्रेपि समाकलनीयम् । श्रीकृष्णविषयिणीरति र्देवावलम्बनतया भावरूपा पुरोदितेन व्यतिरेकालङ्कारेण सम्भोगशृङ्गा(३)रस्य च ध्वनिना जयत्यर्थाभिव्यज्यमानेन नमस्कारेण चानुप्राणिता कवितात्पर्यविषयीभूताऽसंलक्ष्य क्रमतया पण्डितराजानुमतया संलक्ष्यक्रमतयावा ध्वन्यते, सचायमष्टविधेभ्यो(४)गुणीभूतव्यङ्ग्येभ्योव्यतिरिच्यमानोऽप्रधानीभूतशब्दार्थालङ्कारोवाच्यातिशयीतिपारिभाष्यध्वन्या(५,त्मकतयैतदुत्तमंकाव्यम् "इदमुत्तममतिशयिनि व्यङ्ग्येवाच्याद्दिति प्रकाशनिरुक्तेः । एतेन प्रधानव्यङ्ग्यस्यातिशयि विच्छित्तिविशेषाधायकत्वेन तदभावस्य मध्यमकाव्यतायाः प्रयोजकस्य, कवितात्पर्यगोचरतया च तदनाश्रितव्यङ्ग्यकत्वात्मकस्याधमकाव्यतायाः प्रयोजकस्य

---

(१) नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा सैववासनेत्युच्यते, तत्सद्भावएव वक्तृवैशिष्ट्यादिना भवति व्यङ्ग्यस्यप्रतीतिः । अतएव न शाब्दिकानां रसप्रतीतिः । उक्तंच "सवासनानां नाट्यादौ रसस्यानुभवोभवेत् । निर्वासनास्तुरङ्गान्तर्वेश्मकुड्याश्म सन्निभा,, इति ।

(२) एवकारोऽप्यर्थे ।

(३) सच चित्तवृत्तिविशेषसंयोगकालावच्छिन्नारतिः ।

(४) अगूढा ऽतिगूढस्फुटकाक्वाक्षिप्तवाच्यतत्साधनाङ्गसन्दिग्धतुल्य प्राधान्यरूपेभ्यः ।

[५] तथाहि द्विविधोध्वनिः । तत्रैकोव्यङ्ग्यसामान्यात्मा । परश्चोत्तमकाव्यतानुकूलवाच्यातिशयिव्यङ्ग्यविशेषात्मेति ।

विरहान्तयोः प्रसङ्गः। इहापि ध्वनिसङ्करोरसस्याङ्गतया रसवदलङ्कारश्च। "रसभावौ तदाभासौ भावस्य प्रशमस्तथा। गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा। रसवत्प्रेयऊर्जस्वि समाहितमितिक्रमादितिवचनात्"। भावत्वञ्च विभावादिव्यज्यमाननिर्वेदाद्यन्यतमत्वं तच्च "निर्वेदग्लानिशङ्का श्रमधृतिजडताहर्षदैन्यौग्र्यचिन्तास्त्रासेर्ष्यामर्षगर्वास्स्मृतिमरणमदास्सुप्त निद्राविबोधाः। व्रीडापस्मारमोहास्समतिरलसतावेगतर्कावहित्था व्याध्युन्मादौ विषादोत्सुकचपलयुतास्त्रिंशदेते त्रयश्चे,,ति दशरूपके प्रतिपादितम् एतदुपलक्षणं गुरुदेवनृपपुत्रादिं विषयाणां रतीनाम् एतेन पुत्राद्यालम्बनं वात्सल्याभिधं रसान्तरमिति परास्तम्। यदाहुः "रतिर्देवादिविषया व्यभिचारी तथाञ्जित,, इति। तदाभासश्चानुचितविभावालम्बनः। 'प्रशमो, नाशः॥ पुरोदीरितनियताकाङ्क्षया विशेषणत्रितययोजने "जयतीत्यन्तेन वाक्यपरिसमाप्तौ पुनस्तदवयवाभिहिते विशेषणान्वये समाप्तपुनरात्तताप्रसक्ति,, रित्याक्षेपोनिरस्तः,अनियताकाङ्क्षयैव हि तदन्वये भवति तदापादनं, नियताकाङ्क्षाराहित्यस्य तत्र दूषकता वीजत्वात्। अतएव "प्रागप्राप्त निशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्क्रोधप्रेरित भीमभार्गवभुजस्तम्भापविद्धः क्षणात्। उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि र्येनानेन जगत्सु खण्डपरशुर्देवोहरः ख्याप्यत,, इत्यत्र नोक्तदोषानुवृत्तिरिति प्रतिपादितं काव्यप्रदीपे। समभासिता च, तस्यैव भासा विश्वमिदं विभातीति श्रुते(क०मु०)रितरेषां जडत्वेन(१)परिच्छिन्नत्वेन(२)तथात्वायोगाच्च। एव

---

(१) अज्ञानत्वेनानात्मत्वेन वा।

(२) स्वसमानसत्ताकात्यन्ताभावप्रतियोगित्वेन तादृशान्योन्याभावप्रतियोगित्वेन, ध्वंसप्रतियोगित्वे न चेत्यर्थः। वस्तुतआत्मावृत्तित्वंविशिष्टप्रतियोगितासम्बन्धेनात्यन्ताभावेन भेदेन चेति गौडब्रह्मानन्दकृता यामद्वैतसिद्धिव्याख्यायांद्रष्टव्यम्॥

ञ्चन शब्दप्रमाणालङ्कारः। णिनिप्रत्ययेनाभिधीयमानेन शीलेनशश्वतिक भासनयोग्यत्वं व्यज्यते। एतेनासाधारणधर्माभिधानेन ब्रह्मतादात्म्यं, ललितत्वेन च कार्येणानन्दरूपत्वं तत्साधकत्वं वा जयत्यर्थसाधनं गम्यते। ललितपदं शोभनं ब्रूतइतिवा। अथवा समेत्यादेः समं, सदृशगुटिका कलितं शोभनं वा 'भासि, दीप्तिमत्। तुल्येन शोभनेन वा भासेनाश्रीय माणं वा 'ललितं, हारविशेषोयस्येत्यर्थः। नचान्तिमे पक्षे "न कर्मधारया-न्मत्वर्थीय,, इत्यनुशासनविरोधः भासोस्त्यस्मिन्निति व्युत्पत्तेरेवोक्तार्थबोधायाश्रयणीयत्वादितिवाच्य, 'मसुव्वत, इतिमहाभाष्यनिर्देशात् महाक-वीनां तादृशप्रयोगबाहुल्याच्च निरुक्तानुशासनं हि भ्रमविषयत्वेनांशतःक-ल्पनीयम्। वस्तुतस्तु समत्वं भासिपदार्थस्य भासविशिष्टस्य विशेषणमेवश्च रूपविशिष्टोघटोऽनित्य इत्यत्र वेदान्तपरिभाषोदाहृतेऽनित्यत्वस्य रूप इव प्रकृतेऽपि भासेऽपि धर्मितावच्छेदके विशिष्टवैशिष्ट्यबोधमर्यादया समत्वस्या न्वयेनोक्तार्थलाभोऽनपवादएव। ननु शब्दाश्रयो गगनं नित्यमित्यादौ शब्देऽपि नित्यत्वस्य तुल्यन्यायादन्वयः प्रसज्येत, यद्विशिष्टे यद्भासते तत्रासतिबाधके तदन्वयस्य नियतत्वादिति। एतैरशेषैरपि पक्षैर्जयत्यर्थ-साधनैर्व्यतिरेकाङ्ग काव्यलिङ्गालङ्कारै रतिः प्रतीयते। "ललितं हार-भेदेस्यादीप्सितेऽपि चे,, तिविश्वप्रकाशः। किञ्च 'समैः, सकलैर्भासिभि 'र्ललित, मीप्सित मितिवाऽर्थः सुभगाअपीदमीयदीप्त्यै स्पृहयन्ति, प्रयो-जनभूतेनच तेन निरतिशयं रामणीयकं तेनचोत्कर्षसाधनेन रतिर्ध्व-न्यते। हरिद्वसनपरिधानेन भवति शोभा गौराङ्गनानामिति तच्छोभि-त्वं प्रकृतेनानुपपन्नम्। हरिदम्बरशोभीत्यनेनावसीयमानं प्रसिद्धच-पलाविसदृशत्वमुपजीवति प्रधानव्यतिरेक इत्यनयोरङ्गाङ्गिभा-वसङ्करः। यद्वा हरिद्यति खण्डयति हरिदस्तं हरिरिन्द्रस्य काकिर्यायी-

विषस्यवा खण्डकं दर्पविनाशकं, गोवर्धनाभिधमहीध्रसमुद्धारणेन संवर्तसंवर्तप्रतिमधाराधरनिकरसर्वतो—मुखासारतो व्रजरक्षणात् पारिजातपादपाहरणात् प्रधर्षणादन्यत्र प्रेषणाच्च । दृश्यन्त उत्कर्षापहारकेऽपि खण्डन पदस्य प्रयुक्तयः, एतच्च परिपुष्णाति पुरोदीरिता मुत्कृष्टताम् " हरिरिन्द्रो हरिस्सर्प " इत्यनेकार्थध्वनिमञ्जरी । 'वरशोभिन्या, श्रेष्ठया कुंकुमेनजनितयावा, 'शोभया, कान्त्या । 'वरस्य, वरप्रदानस्य 'शोभया, समीहया । स्वोपासकेषु वा श्रितयेत्यर्थः । प्रकृष्टकान्तिमत्या कुङ्कुमानुलेपन विराजितया उपासकेषु साकाङ्क्षयेतियावत् । अन्तिमे सदयत्वं व्यङ्ग्यम् । ''वरोऽभीष्टे देवतादेश्श्रेष्ठे काश्मीरजेमत,, इति विश्वः । अत्र लोकोत्तर तिमिरपुञ्जत्वेन रूपेण भगवतः प्रतिपादने विशेषणाना मानुगुण्यं वेदितव्यम् ॥ अथवा वञ्जुलस्याशोकस्य निरुक्तकुञ्जे तिमिरपुञ्जं तत्त्वेनाध्यवसिता कालीमूर्तिः वृन्दावनाधिष्ठातृ देवता, तस्याश्च चिच्छक्तिरूपत्वेन समभासित्वं ललितत्वञ्च । हरिदम्वरशोभि, दिगम्बरशोभि । ''वद्धकाञ्चीं दिगंशुका,, मिति स्वतन्त्रतन्त्रे । 'चपलया, तत्वेनाध्यवसितया तत्परिचारिकया देव्या, 'मिलितं' सेवितम् । 'चपलया, विभूषया वा 'सर्वालंकारयुक्तां च मुण्डमाला विभूषिता, मितितच्चिन्तनात् । यद्वा कृष्णरूपा काली । हरिदम्वरेत्यादेः पुरोदीरित एवार्थः, कृष्णस्य कालीरूपता रामस्यच तारिणीरूपतेत्यागमस्य रहस्यम् । एतत्पक्षेऽप्यन्यत्सर्वं पूर्ववद्बोध्यमिति ॥ अनुप्रासदूषणैः प्रसिद्धि वैधुर्य वैफल्य वृत्तिविरोधैः ख्यातविरुद्धापुष्टार्थ प्रतिकूलवर्णत्वानतिरिच्यमानैरहिताभ्यां वृत्तिश्रुत्यनुप्रासाभ्यां परार्धावस्थितेनान्त्यानुप्रासेनतादृशेन शब्दा लङ्कारै स्तेषा मर्थालंकाराणां संसृष्टिः । वृत्त्यनुप्रासेन श्रुत्यनुप्रासस्य साहचर्या देकाश्रयानुप्रवेशः तथैव तयोरन्त्यानुप्रासेन साकं संकरः । अनुप्रासत्वञ्च छेकवृत्त्याद्यन्यतमत्वं, " रसोवै सः रसं ह्येवायं लब्ध्वा

आनन्दो भवति ,, इतिश्रुतेः, रत्यादि स्थायिभावावच्छिन्नाया विभावाद्या कलन विनिवृत्तावृतेस्स्वप्रकाशानन्द चेतनाशक्ते रसात्मिकायाः परम्परयो पकारकत्वे सति व्यञ्जनवर्णसाम्यं वा । एतन्मतेऽनुप्राससमाख्याऽपि साधु सङ्गच्छते । नच रसस्य तादृशचैतन्यरूपत्वे रस उत्पद्यते नश्यतीत्यादि प्रतीते र्नवधा तद्विभागस्य चानुपपत्तिः, तस्य ब्रह्मात्मकत्वेन नित्यत्वादे कत्वाच्चेति वाच्यं तदवच्छेदकरत्यादीनामुत्पादविनाशशालित्वेनैव तत्र प्रतीतेः स्वाश्रयावच्छिन्नत्व आख्यातस्य लक्षणाया उपगमात् । नवधा-विभागस्यापि रत्यादिस्थायिभावोपाधिकत्वात् जीवेश्वरब्रह्मभेदेन त्रिधा चैतन्य विभागवत् प्रतिपादितमेतद्विस्तरेण रसगङ्गाधरे ।

वृत्त्यनुप्रासत्वञ्च वर्णविशिष्टवर्णत्वं, वै० स्ववृत्तिव्यञ्जनत्व विशिष्टजातिमत्त्व स्वाव्यवहितपूर्ववर्तितावच्छेदक निरुक्त जातिमद्वर्णाव्यवहितोत्तरत्व स्वाव्यवहित पूर्व स्वरसजातीय स्वराव्यवहितोत्तरत्व समानाधिकरण स्वाव्यवहितोत्तरस्वरसजातीयस्वराव्यवहित पूर्वत्व संसर्गावच्छिन्न स्वनिष्ठाव-च्छेदकताक प्रतियोगिताकभेदवत्त्व स्वविशिष्ट वर्ण विशिष्टत्वै तत्सम्बन्ध-चतुष्टयावच्छिन्न स्वनिष्ठ प्रकारतानिरूपित प्रमीयविशेष्यतावत्त्व स्ववि-शिष्टभेदवत्त्वान्यतरसम्बन्धेन ।

प्र० वै० स्वसामानाधिकरण्य स्वसमानाधिकरणभेद प्रतियोगितावच्छेदक-त्वाभ्याम् । स्वाव्यवहितपूर्ववर्तित्वं च स्वविशिष्टत्वं वै० स्वानुकूलकृतिमम-वायिसमवेतकृतिप्रयोज्यत्व स्वविशिष्टक्षणोत्पत्तिकत्वाभ्याम् । वै० स्वप्राग भावाधिकरणत्व स्वविशिष्टव्यञ्जनप्रागभावाधिकरणत्वसम्बन्धावच्छिन्न स्वावच्छिन्नभेदवत्त्वाभ्याम् । वै० स्वघटितघटकत्व स्वप्रागभावाधिकरणत्वा भ्याम् । अव्यवहितोत्तरत्वमपि स्वप्रागभावस्थाने स्वक्षणध्वंसं व्यञ्जन-स्थाने स्वरं निवेश्य निर्वाच्यम् । एवा च परिष्कृतिर्यथायथं कार्या । द्वि.है.

पूर्वोक्तसंसर्गत्रयेण । तृ. वै. स्वभिन्नत्व.'स्वघटितपादघटकत्वाभ्याम् । च. वै. निरुक्तसंसर्ग युगलावच्छिन्न स्वावच्छिन्न भेदवद्वृत्तित्व. स्ववृत्ति व्यञ्जनत्व विशिष्ट जातिसामानाधिकरण्य स्वाव्यवहित पूर्ववर्तितावच्छेदकव्यञ्जनत्वविशिष्टजातिमद्वर्णाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नस्वावच्छिन्न प्रतियोगिताकत्वैः । इह च वैशिष्टयुगलं पूर्वोक्ताभ्यामेव सम्बन्धाभ्यां प्रवेश्यम् । प्रकारतावच्छेदकेषु संसर्गेषु तृतीयस्य निवेशाल्लाटानुप्रासयमकयोस्तुरीयस्य निवेशाच्छेकानुप्रासस्य व्यावृत्तिः । अतएव स्वभिन्नत्वमपि तत्र निवेशितम् । अन्यतरत्र द्वितीयसंसर्ग विवक्षणादेकवर्णेन वृत्त्यनुप्रासे ऽव्यवहितपूर्वत्वोत्तरत्वयोस्तथापरिष्करणात् स्वरेणान्तरितेऽनन्तरिते च स्थलविशेषे तत्र नानुपपत्तिः । इतरेषां फलं स्पष्टप्राय मिति न तत्प्रदर्शितम् । अधिकं स्वयमेव सूक्ष्मबुद्धिभिरालोचनीयमित्येषा सरणिः ॥ श्रुत्यनुप्रासत्वं च हलवयववर्णविशिष्ट तादृशवर्णत्वं, वै.स्वभिन्नत्व स्वजनक पवनाभिघातानुयोगि कण्ठादिस्थानानुयोगिक पवनाभिघातजन्यत्वाभ्याम् । विभिन्नसमानोच्चारणस्थानकै मकार नकारादिभिर्घटिते निरुक्तालंकारानभ्युपगमेऽतादृश स्थानानुयोगिक पवनाभिघाताजन्यत्वमपि तृतीयसंसर्गतया निवेश्यम् ॥ अन्त्यानुप्रासत्वं च पदविशिष्टपदत्वं; वै० स्वभिन्नत्वसहचरित स्वविशिष्टव्यञ्जनविशिष्ट व्यञ्जन विशिष्टत्व. स्वघटितपादविशिष्ट[१]पादघटकत्वान्यतरसंसर्गेण । प्र. वै. स्व घटक व्यञ्जनप्रागभावानधिकरणत्व स्वघटकत्वाभ्याम् । द्वि.वै. स्ववृत्ति व्यञ्जनत्व व्याप्यजातिमत्त्व. स्वाव्यवहितपूर्ववर्तितावच्छेदक स्वरत्वावान्तरजातिमद्वर्णाव्यवहितोत्तरत्व. स्वाव्यवहितपूर्ववर्तितानवच्छेदक व्यञ्जनत्वव्याप्यजात्यवच्छिन्नाव्यवहितोत्तरत्वाभाववत्त्व. स्वाव्यवहितोत्तर स्वर



(१) इह वै. व्यञ्जनवैशिष्ट्य नियामकैस्सम्बन्धैर्बोध्यम् ॥

विशिष्ट स्वराव्यवहितपूर्वत्वैः । वै. स्ववृत्ति स्वरत्वव्याप्यजातिमत्त्व. स्ववृत्तिन्ह्स्वत्व दीर्घत्वान्यतरवत्त्व.स्ववृत्तित्वाभाववद्धर्माभाववत्त्वैः । वृत्ति त्वाभावप्रतियोगितयोरवच्छेदकसम्बन्धश्च स्वावच्छिन्नाव्यवहितोत्तरत्वम् । तृ. वै. स्वघटितत्व स्ववृत्तित्वाभ्याम् । वृ. प्रथमवैशिष्ट्यघटकसंसर्गाभ्याम् । सर्वं चेदं सहृदय हृदयावर्जकत्वेन विशेषणीयम् ॥ चेतोद्रवमया ह्लादव्यञ्जकानां मध्यवृत्तिमुपेयुषां टवर्गभिन्नानां स्ववर्गान्त्यवर्णाक्रान्त मूर्ध्नां वर्णानां रचनया सम्भोगशृङ्गारोचितं माधुर्यं गुणः श्रुतिमात्रेणान्वय स्यावगम्यमानतया प्रसादोऽपि । गुणत्वं च रसस्योत्कर्षकत्वे सति तद-व्यभिचारि स्थितित्वं, रसपदं च रस्यत इति योगेन भावादीनामपि सङ्-ग्राहकम् । युक्तिश्चात्र लक्षणम् कुंजगतत्वंसमभासित्वाद्यन्वयेन तमः पुंज विशेषत्वस्य सिद्धेः । तदुक्तं चन्द्रालोके "युक्तिर्विशेषसिद्धिश्चेद्विचित्रार्थान्त रान्वयात्,, इति ॥ लाटी रीतिः" द्वित्रिपदा पांचाली लाटीया पञ्च सप्त वा यावत्, शब्दाससमासवन्तो, भवति यथाशक्ति गौडीया,, इत्यभिधानात् ॥ गीतिकावृत्तम् "आर्या प्रथमार्धसमं यस्या अपरार्धमाह तांगीतिम्,, इति केदारभट्ट भाषितलक्षणात् । प्रकृतभावानुकूलत्वेन नात्र हतवृत्तता शङ्कितुं शक्या । अत्रैतन्मङ्गलश्लोकस्याख्यायिकेतिवृत्तानाक्षेपकत्वेऽपि न क्षतिः, नान्द्यादावेव तन्नियमात् कथंचित्प्रकृतेऽपि सम्भवाच्च । इहादौ भगणः ऽ।। "भादिगुरुः,, इतिलक्षणात् "भेन्दुर्यशोनिर्मलम्,, इतितत्फलश्रुतेर्नात्र गण दोषः । तस्य च रेवतीनक्षत्रं, गुरुर्वासरः, देवता जातिः, शुक्लोवर्णः, प्रभावती पुरी, शुभं फलम्, ॐ भं भगणायनम इतिमन्त्र, इति सर्वं चतुर-स्रमिति संक्षेपः ॥ १ ॥

चेतोवसूनि व्रजमानिनीना मामोषितुं सद्वलिशालिनीनाम्।
वेणुं शयेसन्धिमिवादधानं मान्यं युवानं जगतां नमामः॥२॥

चेतोवसूनीति । समीचीनाभिस्त्रिवलिभिरेववलिभिश्शब्दसादृश्यात् (१) परहारकत्वाच्च, शोभिनीनां, श्लेषनिबन्धनतयोपमेयतावच्छेदक पुरस्कारेणोपमेये शब्दान्निश्चीयमानस्योपमानतादात्म्यस्य रूपकरूपत्वे(२)न तद्विशेषस्य परस्परसापेक्षरूपकसमुदायात्मकस्य सावयवस्य विरहात् मालात्मकत्वायोगाच्च केवलनिरवयवरूपकस्य सङ्करः । अतएव व्रजाभिधप्रदेशस्य, ननु कस्य च नैकग्रामस्य । 'मानिनीनां, रामणीयक प्रमुखानेक विषयाभिमानवतीनाम् । ननु मानिन्याः । मानसान्येव धनानि चोरयितुम् । सद्वलिशालिनीनामित्यनेन कार्यकारणभावविधया सौन्दर्य पूर्णतारुण्यं, तादृशीनां वसुचौर्येऽतिदुष्करत्वं. तत्र प्रवर्तनेन यूनि प्रवीणत्वं च ध्वन्यते । चेतोहरणेन च व्रजमानिनीषु श्रीकृष्णविषयिणी प्रीतिः । अभिमाने सौन्दर्यादिव्यङ्ग्यद्वारा सद्वलिशालित्वस्योपयोगितया ऽनपेक्षणीयव्यङ्ग्य व्यापारस्य नैयायिकाभ्युपगतलिङ्गव्यावर्तकेन काव्यविशेषणे नोपेतस्य काव्यलिङ्गस्याप्रसक्त्या पुरोदीरितश्लेषभित्तिक रूपकानुप्राणिततया सङ्कीर्णः परिकरालङ्कारः । वलवद्भिराश्रितत्वस्य "मदीयं धनं न केनाप्यपहर्तुं शक्यम्,, इत्याद्यभिमाने साक्षादेव हेतुतया तथाभूतं काव्यलिङ्गं वा । चेतस्स्तेयस्यासम्भवितया तत्र धनतादात्म्यारोपस्य प्रकृतार्थोपयोगितया "महर्षेर्व्यास पुत्रस्य श्रावं श्रावं वचस्सुधाम् । अभिमन्युसुतोराजा परां मुदमवाप्तवान्,, इतिरसगङ्गाधरोक्तोदाहरणइव समासगः प-

(१) सादृश्य निमित्तकस्यैव तादात्म्यस्य रूपकत्वम् । अतएव "मुखं मनोरमा रामा,, इत्यादौ नाति प्रसक्तिः ।

(२) पुरस्कारेणेत्यन्तेनापह्नुतिभ्रान्तिमदतिशयोक्ति निदर्शनालङ्काराणां व्युदासः । शब्दादित्यनेन प्रात्यक्षिकाहार्य गोचरतादात्म्यस्य "मुखमिदमब्ज,, इत्यादौ प्रसङ्गः । निश्चीयमानस्येत्यनेनोत्प्रेक्षाया निरासः

रिणामालङ्कारः। आरोपस्य प्रकृतवाक्यार्थानुकूलतायां परिणामः, अतथात्वे च रूपकमित्यनयोर्विशेषः। चौर्यसाधनमनतिदीर्घाकृतिरस्त्रविभेद सिंसहेति मैथिलभाषया विश्रुतस्सन्धिः तमिव वंशीं करे धारयन्तम् "शेते सर्वमस्मिन्निनितिशयो हस्तः,, प्रायेण कार्यमात्रस्य कराधीनत्वात्,, इति शब्दकल्पद्रुमः। सन्धेर्वेणुतया सम्भावनाया इव शब्द प्रतिपाद्यमानाया स्सद्भावात्प्रकारविशेष्ययो स्स्वपदाभिधेयतयोक्तविषया वाच्या वस्तूत्प्रेक्षा(१)लङ्कारः तयोरनेकत्वात्। सन्देहे कोटियुगलस्य साम्यमिह तु तत्रैकत्र कोटौ निर्णीत प्रायत्व मितिविवेकः। एवं भूतमपि 'जगता मखिल भुवनानाम् न तु जगतः। मान्यम्। अपेर्विरोधमभिदधतोऽनुक्त्या "आभासत्वे विरोधस्य विरोधाभासइष्यत,, इति कुवलयानन्देऽप्पय्यदीक्षित विहितलक्षणस्य विरोधाभासालङ्कारस्य ध्वनिः। केचित्तु अपेरनभिधानेऽपि विरोधालङ्कारमेवाङ्गीकुर्वन्ति, तन्मते प्रकृते निरुक्तालङ्कारएवेति विभावनीयं साहित्यरसिकैः। युवानं नतु बालं स्थविरं वा, तेन सद्गलिशालिनीनां धनाहरणस्यासम्भवात्। जगतां मान्यत्वेन कार्येण भुवननिवहवर्तिजनसमुदायनिष्ठा श्रीकृष्णविषयिणीरतिर्भावात्मिका, व्रजमानिनीषु वर्तमाना तादृशीरतिश्शृङ्गाररसस्थायिभावरूपा व्यज्यमाना नमाम इत्यनेन द्योत्यमानायां कविगतायां रतौ भावेऽङ्गभावमाश्रयत इति प्रेयोऽलङ्कार रसवदलंकारयोस्संसृष्टिः। उदितरीत्या पारिभाष्य भावध्वनिः, तेनैतदप्यारोढुमर्हत्युत्तमकाव्यस्य पदवीम्। शब्दालंकारध्वनि संकराश्च विस्तरभयेनाप्रपञ्चिता दर्शितदिशा सर्वत्र स्वयमूहनीया मनीषिभिः। प्रसादोगुणः "शैथिल्यं प्रसादः,, इति वामनसूत्रस्य (३ अधि. १ माध्याय. ६ सं.)

---

(१) साच स्वतस्सिद्धे विषयेऽसम्भवितया ज्ञातस्य सादृश्यहेतुका तादात्म्य सम्भावना। एषा चोत्कटकोटिकस्सन्देहः। उत्कटत्वञ्च विषयताविशेषः सम्भावयामीति प्रतीतिसाक्षिकः।

"बन्धस्य शैथिल्यं शिथिलत्वं प्रसाद ,, इति वृत्तिस्वरसात् । वैदर्भी रीतिः "अवृत्तिरल्प वृत्तिर्वा वैदर्भी रीतिरिष्यत ,, इति प्रतिपादनात् । रीतौ वैदर्भ्यादि समाख्या च विदर्भगौडपाञ्चालेषु देशेषु तत्रत्यैः कविभिर्यथा-स्वरूपमुपलब्धत्वात् " विदर्भादिषु दृष्टत्वात्तत्समाख्या ,, इति हि वामन सूत्रम् ( १ मे.अधि. २ याध्याये १० मम् ) । इन्द्रवज्रावृत्तं " स्यादिन्द्र वज्रायदितौ जगौग,, इतिलक्षणादिति ॥ २ ॥

नवीन विलसत्प्रभश्रितवलाक कादम्बिनी
विडम्बन सितोरग स्रगति दीप्त देहद्युतिः ।
पिशङ्ग फणि सङ्गिनी शिरसि यौवनोद्भासिनी
मनागपि मदन्तरे स्फुरतु धूर्जटेः कामिनी ॥ ३ ॥

नवीनेति । वृष्टि प्राक्कालिकया विलसत्प्रकृष्टकान्तेः उपसर्गस्य वाचकत्वेन(१)प्रकृष्टत्वस्य विशेषे हेतुतया काव्यलिङ्गम् । बकपङ्क्तिश्रितायां, न तु केवलाया, अतएव रसगङ्गाधरोक्ते "वामाकल्पित वामाङ्गो भासते भाललोचनः । शम्प(२)या सम्परिष्वक्तो जीमूत इव शारद " इत्यत्रैव प्रतिबिम्बोपादान विरहकृता नोपमायां न्यूनपदता । जलदमालाया अनुकरण कृता धवला हि माल्येन दीप्ता देह द्युतिर्यस्या इत्यर्थः । अत्र स्वतस्सिद्धेन वस्तुनोपमालङ्कारोऽति स्फुटतया बोध्यते, सा च यथोक्तकादम्बिन्या निरूपिता । तादृशेन चालङ्कारेण सपदि तापशान्ति कारित्वं

---

( १ ) उपसर्गस्य वाचकत्वं संख्याविशिष्ट घटादेर्घटपदार्थत्व प्रत्याख्यानयुक्तिभिर्व्यव-स्थापनीयम् ।

( २ ) विद्युता ।

श्यामल शालित्वञ्च भावपोषकं व्यज्यते। "खर्वमूर्त्ति नीलवर्णाम्" इत्येक जटाध्यान प्रस्तावे तारा पारिजातवचनात्। न च तयोर्धर्मस्याहिमाल्य व लाक्षात्मकस्य पार्थक्यात्साधारणत्वाभावेन कथङ्कारमुदितालङ्कारो गम्येतेति वाच्यं, "कोमलातप शोणाभ्र सन्ध्याकाल सहोदरः। कषाय वसनोयाति कुङ्कुमालेपनो यतिः" इत्यादाविव प्रकृतेऽपि निरुक्तधर्मयोर्विम्बप्रतिविम्बभावस्य भेदनिश्चयेऽपीच्छयैकत्वेनारोप रूपस्य सत्तया "साधारण धर्मस्य क्वचिदनुगामितयैक्य रूपेण निर्देशः विम्ब प्रतिविम्बभावो वा दृष्टान्तवत्,, इत्यलङ्कारसर्व्वस्वकारोक्तेस्स्वसाजात्य स्वतादात्म्य स्वाभेद विषयकाहार्य्य ज्ञानगोचरत्वान्यतम सम्बन्धेनोपमानगतधर्म विशिष्टधर्म्मवत्त्वस्योपमानसाधारण धर्म्मवत्त्व परिष्कृतस्योपमेये सद्भावात्। न च स्ववृत्ति धर्मवत्व स्ववृत्ति धर्मसदृश धर्मवत्त्वान्यतरेणोपमानविशिष्टत्वस्यैवोपमाप्रयोजकत्वमास्तां कृतं क्लिष्टकल्पनयोदीरितयेति साम्प्रतं, सादृश्यस्य निमित्तसव्यपेक्षत्वेन तत्प्रवेशेऽनवस्थानात् साधारणधर्मेणोपमानोपमेययोस्तादात्म्य प्रतीति कृतस्यैव चारुत्वस्योपमायामिष्टत्वेनान्तरेण धर्मयोरभेदाध्यवसायं तदुपपादनासम्भवात्। नचैव मप्युपमानोपमेय वृत्ति धर्मस्य साधारणत्वेन तदनुपपत्तिर्निरुक्तान्यतमं सम्बन्धेन धर्मविशिष्टधर्म्मस्य तथात्वादित्यलमलङ्कार मीमांसयेति। देव्यास्सिता हि माल्यवत्त्वञ्च "स्फुरन्तीं लसच्छ्वेत नागेन्द्रहाराम्" इति ब्रह्मसंहिता प्रमाणयति। पिशंगेति। शिरसि पीतेन फणिना संगता, नतु साधारणेन भुजंगमेन। अयमेव चाक्षोभ्य ऋषिः, तथा चैकजटा प्रकरणे नील तन्त्रे "मौलावक्षोभ्यभूषिताम्,, इति। यौवनोद्भासिनीति णिनिप्रत्ययेन शीलप्रतिपादकेन यौवने सार्वकालिकत्वम् उतातुभासस्य शरीरमात्रे मातुमशक्तत्वेनोद्गमनात्तदतिशयो व्यज्यते। ईषदपि तादृशी, "धूर्जटेः,, धुरस्त्रैलोक्यचिन्ताया 'जटिः'

संघातो यत्र, तस्य कामिनी, एतेन देव्यामपि त्रैलोक्य चिन्ता समुदयो द्योत्यते "स्त्रीणां हि साहचर्य्याच्चेतांसि भवन्ति भर्तृ सदृशानि । मधुरापि मूर्च्छयते विष विटपि समाश्रिता वल्ली,, इति अर्थान्तरन्यासालङ्कार प्रकरणेऽभिधानात् । ईषदपि स्फुरणस्य विधिना प्रार्थनयेष्ट दातृत्वं, धूर्जटेः कामिनीत्यनेन शिव विषयिणी रतिस्तत्राभिव्यज्यते । अन्य कामिन्यपेक्षया वैधर्म्य प्रतिपादनेन व्यतिरेकालङ्कारः । पुराविहित व्यङ्ग्यार्थैरुप जीवितस्य तादृश कामिनी विषयक रत्यात्मभावस्य प्राधान्येन ध्वननात् भावध्वनिः तेन चोत्तमकाव्यता । रसस्य प्रधान व्यङ्ग्यभावाङ्गतया रसवदलंकारः । ओजोमाधुर्यञ्चगुणः "गाढ़बन्धत्वमोज,, इति वामनसूत्रात् (३ अधि १ अ० सू० ५ ) पूर्व्वार्द्धे गौडी तृतीय पादार्द्धे पाञ्चाली ततश्च वैदर्भी रीतिः असमासातुरी योर्द्धं समासा च यथेप्सितम् । तदेकान्त समासा च विज्ञेया सा यथा क्रममिति गुणरत्ने साहित्यसारे तासां लक्षणात ।। वस्तुतस्तु "प्रधानेन व्यपदेशाभवन्ति,, इतिन्यायाद्गौड़ो रीतिः पादद्वयविषयकतया व्यपदेष्टुमुचिता इतररीत्यपेक्षया व्यापकत्वेन प्राधान्यादिति ।। पृथ्वी वृत्तम् एतस्य पादेषु ( ।S।।।S।S।।।S।SS।S ) एवं क्रमेण लघुगुरुवर्णानामुचितानां न्यासादिति ।। ३ ।।

मुनि प्रमदनं रामोद्दीपनं वा सुमाकरम् ।
वीजं कवीनां वंशस्य प्राचेतसमुपास्महे ।। ४ ।।

लक्ष्मीश्वरीचरिताख्या माख्यायिकां चिकीर्षुः कविस्तदङ्गतयाऽन्य कविवृत्तेषु वर्णनीयेषु प्रथमकवित्वेन वाल्मीकिमेवादौ वर्णयति मुनिप्रमदन मित्यादिना । आख्यायिकालक्षणं दर्पणे यथा "आख्यायिकाकथावत्स्यात्कविवंशादिकीर्तनम् अस्यामन्यकवीनाञ्चवृत्तं पद्यं क्वचित् क्वचित् ।

कथांशानां व्यवच्छेद आश्वास इति कथ्यते। आर्यावक्त्रापवक्त्राणां छन्दसा येनकेनचित्। अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्,, इति। कथालक्षणमपि तत्रैव "कथायांसरसं वस्तु गद्यैरेव विनिर्मितम् आदौपद्यै र्नमस्कारः खलादेर्वृत्तकीर्तनम्, इति। आदिनाऽऽदिना चरित्रस्य द्वितीयेन सज्जनस्य परिग्रहः। आश्वासेत्युपलक्षणं लम्भोच्छ्वासोल्लासाभिधानानाम्। वक्त्रलक्षणं वृत्तरत्नाकरे "वक्त्रं नाद्यान्नसौस्यातामब्धेर्योऽनुष्टुभि ख्यातम्,,इति(१)। अपरवक्त्रलक्षणं काव्यादर्शविवृतौ"अयुजिननरलागुरुस्समे तदपरवक्त्रमिदं नजौजरौ,,[२]वैतालीयं पुष्पिताग्राञ्चेच्छन्दस्यपरवक्त्रकम्,, इति। वैतालीयपुष्पिताग्रयोर्लक्षणं छन्दोमञ्जर्यां "षड्विषमेऽष्टौ समेकला स्ताश्चसमेस्युर्नो निरन्तराः। नसमात्र पराश्रिताकला(३) वैतालीयेऽन्तेरलौगुरुः। "अयुजिनयुगरेफतोयकारो युजितुनजौ जरगाश्चपुष्पिताग्रा,, इति। केचित्तु पुष्पिताग्राभिधं छन्दऔपच्छन्दसिकमेवमन्यते, तदेतद्वृत्तरत्नाकरस्यनारायणीयव्याख्यायां प्रतिपादितविस्तरेण। यत्तु "वृत्तमाख्यायतेयस्यां नायकेनस्वचेष्टितम्,, इतिवचसाऽऽख्यायिकानिरूपण प्रकरणायेन नायक एवाख्यायिका मभिदध्या दित्युक्तं, तन्नयुक्तम्, " अपित्वनियमोदृष्ट स्तत्राप्यन्यै रुदीरणाद्,, इत्याचार्यदण्डयाचार्यवचन प्रामाण्यात्। एतेनात्रेतिवृत्तस्य नायका नुपनिबद्धत्वेपि नक्षतिर्लक्षणस्य। अत्र महाराज लक्ष्मीश्वर सिंहो नायकः, नायिकाच तदीयमहिषी लक्ष्मीश्वरी देवी। तच्चरित्रमितिवृत्तम्। अङ्गतया तयोः पूर्वजानामपि चरित मुपन्यस्तं व्यञ्जनया

---

(१) आद्यादक्षरान्नसगणौनस्यातां तुरीयाक्षराद्यगणः स्यात्, तदतिरिक्ताश्चवर्णाइच्छयानिवेशिताः स्युस्तर्हि अष्टाक्षरपादकेच्छन्दसि वक्त्रं नामतद्भवति।

(२) विषमेपादे क्रमेण नगणौरगणोलघुर्गुरुश्च, समेपादेनजजरगणाः तदेतदपरवक्त्रकम्।

(३) समा, द्वितीयाप्रभृतिः कला पराश्रिता न कार्या।

तयोरेव प्रशस्ततां बोधय द्रति कविमाश्रितां परिपुष्णाति, सोऽय मर्थ-शक्तिमूलकोऽसंलक्ष्यक्रमः प्रबन्धेध्वनि र्भावस्य । उक्तेचचरित्रे क्वचित् शृङ्गारस्य, क्वचित् वीरस्य, क्वचित् करुणायाः क्वचित् अद्भुतस्य, क्वचित् भयानकस्य क्वचित् शान्तस्य व्यञ्जकतया रसपदेनभावस्यापिग्रहणा-दन्ततस्तव्यञ्जकत्वेन सरसत्वोपपत्त्याऽऽख्यायिकालक्षणावयवसङ्गतिः, इतराण्यपि विशेषणानि स्फुटतया स्वयमेव समन्वेयानि ॥ वासुमाकर मिति वाशब्द स्साहश्यमभिधत्ते श्रौतोपमालङ्कारविचारे "यथेववादिशब्दाना-म्,, इति प्रदीपेदर्शनात् । सुमाकरं वसन्तमिव मुनीनां प्रहर्षात्मह महङ्कार-कारणंवा, अनेनैवरूपयोऽभिमन्यन्त इति सर्वेभ्यस्तेभ्यउत्कर्षोभावाङ्ग तया व्यज्यते, "प्रमदस्सम्मदे मत्त,, इतिविश्वः । परत्र मुनीनां तदाख्य विटपिनां प्रमदनं विकाशकं, प्रमदस्य चेतन धर्मतया बाधेन विकाशे जह-त्स्वार्थलक्षणायां वाच्यार्थस्यात्यन्ततिरस्कृततया तदतिशयो ध्वन्यते, भ-वतिच वसन्ते मुनिवृक्षेषु प्रसूनोद्गमः "मुनीनामप्युत्कलिकाकरे,, इति वासवदत्तायांतस्यवर्णनात् । विपिनशोभाभिवर्धनेन तत्रवासिनांतेषां हर्षप्रद मितिवा ॥ 'रामस्य, रामचरित्रस्योद्दीपनं रामायणाभिध महाकाव्यविरचना त्मकाशकं, 'रामेण, रामेतिनाम्ना उद्दीप्यत उद्दीपनं "कृत्यल्युटोवहुलम्,, इति भगवतः पाणिने रनुशासनात्, विराजमानंवा, सप्तर्षिदेशितेन राम-नामजपेनैव महर्षित्व मसौलेभ इति पौराणिकीकथाऽत्र विज्ञेया । यद्वा रा-मस्य मनोज्ञस्य गङ्गावतरण विश्वामित्रवृत्त तु विलसितादे रुद्दीपनं व-र्णयितारम् । अन्यत्र रामाणां रमणीनां कामाभिवर्धनम् । रामंप्रकृत्य "राघवेचासितश्वेतमनोज्ञेषु,,इति "रामाऽङ्गना,, इति विश्वप्रकाशः । इयं-च श्रौती पूर्णोपमा अङ्गानां चतुर्णा मुपादानात् । एतस्याश्च श्लेषमूल-कतया सङ्करः । काव्यादर्शकृन्मयेतु शब्दपरिवृत्त्यसहत्वेन शब्दश्लेष निमित्त

कतया श्लेषोपमाया अप्रसक्तत्वेनेयं समानोपमा,तल्लक्षणोदाहरणे यथातत्रैव "सरूपशब्दवाच्यत्वा त्सा समानोपमा यथा । बालेवोद्यानमालेयं शालका-नन शोभिनी,, इति ॥ अत्रच प्रतिपाद्यतोपरागेण शब्दस्यैव साधारण-धर्मत्वंबोध्यम् (१७४) पृ०रसगङ्गाधरे तत्प्रतिपादनात् । नच विद्यमान-स्य शाब्दबोधावलम्बनस्यैव तथात्वेनशब्दस्य स्वजन्येशाब्दाभिधे ज्ञाने-ऽभासमानतया नोदितधर्मता सम्भवतीति साम्प्रतं, वैयञ्जनिकबोधेन वि-षयीकृतस्य शब्दस्य क्वचित्तादात्म्येन क्वचिद्वाच्यतया पदार्थांशे शाब्दबोध विषयत्वस्यालंकारिकै रुपगमात्, नहिन्यायनयइवेहापिशाब्दबोधप्रणाली, नवाविद्यमानस्य साधारणधर्मस्याभिधेय त्वेवेतिनियमः एवंसति नकाप्यनु-पपत्तिः, अतएव "उदेति सविताताम्र स्ताम्रएवास्तमेतिच । सम्पत्तौच विपत्तौच महता मेकरूपता,, इत्यादौ प्रस्तुतस्य विशेषस्य सामान्येन समर्थनात्मके ऽर्थान्तरन्यासे नकथितपदत्वस्य दोषता प्रसक्तिः, नवा "दयातितिक्षासत्यञ्च युक्तं त्यक्तुं ननुत्वया । अपवर्ग व्यञ्जनानि कथं-स्यु र्भीमभूमिपे,, इत्यादौ भीमनामधेयेभूमीपतौ व्यङ्ग्येन भीमभूमिप पदेन तदात्मतयाश्रुते तथाविधेन पवर्गाघटकव्यञ्जनेन तदात्मतयाश्रुतानां दयाति-तिक्षादीना मसम्भवस्य कथंस्यु रित्यनेन प्रतिपन्नस्य वाच्यार्थस्योपपादक-तयोक्तयो श्शब्दात्मार्थयोर्गुणीभूतव्यङ्ग्यत्वानुपपत्तिरिति॥ कवीनां, लोको-त्तरवर्णनानिपुणानां, वंशएव कुलमेववंशो, वेणुः 'दीर्घत्वात् तस्य 'बीजम्, अङ्कुरकारणं, श्लेषनिमित्तकसमर्थ्यसमर्थक भावोपेतारोपयुगललक्षणक-मलङ्कारः श्लिष्टपरम्परितरूपकम् । कविकुलकारण मिति वा, कविकु-लस्य तत्त्वात्मक मिति वा । "बीजं रेतसि तत्त्वेच हेतावङ्कुर कारणे,, इति विश्वः । प्रचेतसो नतुसाधारणमुनेरपत्यं प्राचेतसं वाल्मीकि मुपास्महे । भावध्वनिः ॥ ४ ॥

यद्गद्यबन्धकलनं किलसन्तनोति
काव्ये कृतौ कुशलतातिशयं सुबन्धुः ।
शक्तिस्फुरत्कविनतालि सुबन्धुराङ्घ्रि-
पङ्केरुहोऽजयदयं नितरां सुबन्धुः ॥ ५ ॥

"बाणोच्छिष्टं जगत्सर्वम्,, इति प्रतीततमा शुक्तरूपोक्तिर्बाणस्यैव महा कवेः प्रतिपादयति सर्वतः प्रधानतां, पर मनेनापि हर्षचरिते "कवीनामगलद्दर्पोनूनंवासवदत्तया, शक्त्येव पाण्डुपुत्राणां गतयाकर्णगोचरम्,,इत्यभिधानात् तदीयच्छायाया निज कादम्बिनीविरचने समुपादानात् तत्पद्यानामलङ्कार निबन्धेषु निदर्शनदर्शनाच्च कविकुलकैरवकलाकरं महाकविमारभ्यमाणै—तद्गद्यकाव्यसमुचितस्तवंतन्निर्मातृषुप्रधानतममुदञ्चम्भन्यायात्सुबन्धुं कीर्तयति यद्गद्यबन्धेत्यादिना, यदीय वासवदत्ताभिधान गद्यकाव्यस्य 'कलनं, सामान्य दर्शनं किलेतिनिश्चये, काव्यनिर्माणे निपुणतरतां सम्यक् विस्तारयति न तु केवलं करोति, यस्यकलनमपि कुशलतातिशयं सन्तनोति किमुत तत्समाकलन मित्यर्थस्य प्रतीयमानतया दण्डापूपिकयाऽर्थान्तरापतनात्मिकायाअर्थापत्त्यलङ्कृतेर्ध्वनिः । सुबन्धुः शोभनोऽशयेनवा बन्धुस्तत्कृत्यकरणात्कवीनां श्रवणादिनानन्दनत्वेन परेषामपीति सुबन्धुनाम्नि योगरूढत्वं व्यङ्ग्य मभिधयेवावयंवव्युत्त्यापि तत्कविमत्याय कत्वात् । 'शक्त्या, "नरत्वं दुर्लभंलोके विद्या तत्र सुदुर्लभा, कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा,, इत्याग्नेयाभिनन्दितेनानुपहसनीयकाव्यकारणतावच्छेदकतयाऽनुमितेन जातिविशेषेणाखण्डोपाधिनावा प्रतिभात्वेनावच्छिन्नाया शब्दार्थयुगलोपस्थिते स्साधनत्वेन शक्त्योत्पन्नया काव्यं कर्तुमितिव्युत्पत्तिवलब्धेनादृष्टा परपर्यायेण संस्कारेण, 'स्फुरतां, प्रतिभाशा-

किना, कवीनां नमनान्येव मधुलिह स्तै श्शोभनं चरणपङ्कजं यस्य तादृशः। समस्तवस्तु विषयं साङ्गरूपकमलङ्कारः। "समस्तवस्तुविषयं श्रौताआरोपितायदा,, इति काव्यप्रकाशलक्षणात्। नतुपरम्परितं, नतावलित्वारोपमन्तरेणापि चरणे पङ्कजस्यारोपयितुं शक्यत्वात्। 'अयं, सः, ननु यच्छब्दस्य पूर्वार्धगतत्वेनोत्तरार्धे तदोऽभावेनानुपपत्ति रितिचेत्, न, "योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः। आत्मपक्षपरिपूरितेजगत्यस्य नित्यसुखिनः कुतोभयम्,, इत्यादाविदमोऽपि तच्छब्द समानार्थकतायाः प्रदीपादौ व्यवस्थापितत्वात्। सुबन्धु रेतन्नामधेयः। अजयदित्यत्रातीतकालिकोत्कर्षस्य पूर्वोक्त विशेषणानुगुणकतया मालारूपं काव्यलिङ्गम्। इहापि न समाप्त पुनरात्तता, विशेष्य वाचक पदस्यपश्चादभिधानात्। सत्कविश्रिताभिर्नमनानुभावेन व्यज्यमानाभीरतिभिः परिपोषितायाः प्रकृतकविनिष्ठाया स्सुबन्धुविषयिण्यारते र्विच्छित्तिविशेषाधायकत्वेनध्वनिः तथा च प्रेयोऽलङ्कारोऽपि। वसन्ततिलकावृत्तम् "ज्ञेयंवसन्ततिलकं तभजाजगौग,, इतिहि तल्लक्षणम् ॥ ५ ॥

सकलं प्रसादयन्ती विमलतमा धूतविधुमाना।
नवकामिनीव कविजनशरणा सावाणभारती भाति ॥६॥

सुबन्धुकवेः परस्तादौचित्येन महाकवि वाणं वर्णयति 'सकलमिति नव कामिनीव' 'नतु कामिनीव नवा नवयोपिदिव, 'सकलम्, अशेषं कलोपेतं वाजनं 'प्रसादयन्ती, प्रसन्नतां नयन्ती नतु प्रसादितवती प्रसादयिष्यन्ती वा, अभिहितंहि दृष्टान्तालङ्कारे दर्पणकृता "अविदितगुणाऽपि सत्कवि भणितिः कर्णेषु वमति मधुधाराम्। अनधिगतपरिमलापिहि हरतिदृशं मालतीमाला, इति। अन्यत्र 'सकलं, निखिलं युवानं वा। 'सकलं, स

मधुरध्वनि। भूषणानामित्यर्थात्, एतच्च प्रसन्नताप्रयोजके णिजर्थे व्यापारे तादात्म्येनान्वेति, अतएवमन्दंगच्छतीतिवद्द्वितीया, भूषणझणत्कारेणानन्दयन्तीतियाव दिति वा। यद्वा 'सकलं, सावलोकनं पुरैवैतदपि णिजर्थव्यापारविशेषणम् अवलोकनेन प्रसादयन्तीत्यर्थः। लावण्यातिशयो व्यज्यते। "कलास्यान्मूलविवृद्धौ शिल्पादावंशमात्रके। षोडशांशेच चन्द्रस्य कलना कालयोः कला। कलं शुक्रे कलोजीर्णेप्यव्यक्त मधुरध्वनौ,, इति विश्वप्रकाशः। विमलतमादुश्श्रवत्वादिना शब्दगतेन, अपुष्टार्थत्वादिनाऽर्थगतेन, स्वशब्दाभिधेयत्वादिना रसगतेन, उद्देश्यप्रतीतिविघातप्रयोजकत्वलक्षणेन दोषेणरहिता, परत्रनानाविधै र्यक्षकर्दम प्रभृतिभि रङ्गरागै रति निर्मला। अतएव 'धूतः, तिरस्कृतः। विधो श्चन्द्रमसो, 'मानः, उज्ज्वलताभिमानोयया, चन्द्राधिकसमुज्ज्वलेतियावत्। इतरत्र 'मान स्सौन्दर्याभिमानः' वियोगिक्लेशावहत्वेन सकलप्रसादकत्वस्य कलङ्कितया विमलतमत्वस्य विधौविरहात् कविजनशरणत्व साधारणधर्मसद्भावाद्रम्यसादृश्यो निरुक्तनिमित्तको व्यतिरेकालङ्कारः श्लेषसंकीर्ण इत्यनयोस्सङ्करः। व्युत्पत्ति वैशद्योपयोगि भूयोऽवलोकनविषयतया परत्रवर्णनीयतया कविजनस्यशरणभूता। यद्वा कविजनएवशरणं यस्या इत्यर्थः, प्रभवन्ति च विलोकितवारस्यायनीयाः कवयएव नवकामिनीं रक्षितु मित्याशयः। 'सा वाणभारती, प्रसिद्धा हर्षचरितकादम्बिनीरूपा वाणस्य सरस्वती। अत्र च तच्छब्दस्य प्रसिद्धार्थकत्वेन "कला च साकान्तिमतीकलावतः,, इत्यत्रेवनयच्छब्दापेक्षा, प्रक्रान्त प्रसिद्धानुभूतव्यतिरिक्तार्थकस्यैवतदस्तदपेक्षणात्। इह पूर्वार्धस्थितयो र्विशेषणयो र्व्यतिरेकपोषकत्वेन तदन्तिके कविजनशरणेत्युपादानं व्यतिरेकाङ्गत्वविभ्रमावहतया नोचित मिति विधुकामिनी भारतीनां साधारणधर्मता प्रतिपत्तये द्वितीयार्धे तदवस्थापनं तथेति नापदस्थ-

पदत्वदोष प्रसङ्गः । प्रथममियं कामिनी तत्रापि नवीना इतीदमीयो पभ्याऽति स्पृहणीयत्वं वाणभारत्यां व्यज्यते । भावध्वनिः । उद्गीतिकावृत्तम् "आर्याशकलद्वितये विपरीते पुनरिहोद्गीतिः, इतितल्लक्षणम् । न च तुरीयचरणे सप्तदशैवसन्तिमात्रा इतिनोक्तलक्षणेन गत मितिशङ्क्यं, पादान्तस्यलघोर्गुरुत्वस्य "गन्ते,, इति पिङ्गलसूत्रेण प्रतिपादनात्, अत एव पारिजातहरणनाटक इन्द्रायकुपितस्य वैनतेयस्योक्तौ "सिन्दूरपूरकृत गैरिकरागशोभे शश्वन्मदस्रवणनिर्झरवारिपूरे । सङ्ग्रामभूमिगतमत्तसुरेभकुम्भकूटे मदीयनखराशनयो विशन्तु ,, इत्यत्रनवसन्ततिलकालक्षणक्षतिः, इति ॥ ६ ॥

शुद्ध मतिभेद मस्तृतप्रकृति श्रेयोमनीष मतिकृद्यम् ।
परमार्थसत्प्रवृत्ति ब्रह्मात्मा वस्तु सज्जनो जयति ॥७॥

ब्रह्मासाधारणधर्मप्रदर्शनेन तदात्मतया सज्जन माख्यायिकाङ्गतयावर्णयति शुद्धमिति । निर्मलमानसं, पत्र सत्त्वादि गुणत्रयोपेतया विचित्रानेकशक्तिशालिन्या ऽघटितघटनापटीयस्या सदसद्भ्या मनिर्वचनीयया ऽनादिभाव रूपत्वेसतिज्ञाननिवर्त्यया भ्रमोपादानभूतया ऽहमज्ञोनजानामीति प्रतीति साक्षिण्या "विवादपदं प्रमाणज्ञानं स्वप्रागभावातिरिक्त स्वविषयावरण स्व निवर्त्य स्वदेशगतवस्त्वन्तर पूर्वकम्,अप्रकाशितार्थप्रकाशत्वा दन्धकारे प्रथमोत्पन्न प्रदीपप्रभावत्,, इत्यनुमानेन "सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं नविदन्त्यनृतेन प्रत्यूढा,, ( छ ) इति श्रुत्याच सिद्धया ऽभाव ज्ञानस्यप्रति योगितावच्छेदकरूपेण प्रतियोगिज्ञानपूर्वकतया ब्रह्माहंनजानामीत्यादि प्रतीतेरन्यथोपपादनस्याशक्यत्वेनावश्यंकल्पनीयाया विषयताया- निरूपिकया "एवमेवैषामाया स्वाव्यतिरिक्तानि परिपूर्णानिक्षेत्राणि दर्श-

यित्वा जीवेशावाभासेनकरोति मायाचाविद्याचस्वयमेवभवति,, इति श्रुत्या सिद्ध मायैक्यया शुद्धमलिनसत्त्वाभ्यां विक्षेपावरणशक्तिभ्यां वा प्रधानाभ्या मुपाधिभ्यांकल्पिततद्भेदया ऽविद्ययाऽनवच्छिन्नम् । " निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्,, इति ( श्वे. ६ अ. ) श्रुते रञ्जनपदस्योक्तार्थकत्वात् । " आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेवकेवला, इति संक्षेपशारीरकानुसाराच्छुद्धब्रह्मणो वाचस्पतिमिश्रोक्तयुक्तेर्जीवस्यवाऽविद्याश्रयत्वमित्यन्यदेतत् । अविद्यायां चित्प्रतिबिम्बो बिम्बत्वाक्रान्त चैतन्यं वेश्वरः अन्तष्करणे चित्प्रतिबिम्बोजीवः शुद्धचैतन्यं ब्रह्मेति पृथग्विधानि मतानि प्रत्यपादिषत सिद्धान्तलेशे ॥ 'भेदं, विग्रह मतिक्रान्तं विग्रहरहित मितियावत् । परत्र सजातीयेन विजातीयेनवा यद्द्वैतं तदतिक्रान्त मद्वितीय मित्यर्थः "एकमेवाद्वितीयं ब्रह्म,,इति(छा.वृ.) श्रुतेः । न च द्वितीयस्यसत्त्वे ऽसत्त्वेवोभयथाप्यद्वैतंव्याहन्येतेतिशङ्कितुं शक्यं,नह्येवयं व्यावहारिकीमपि प्रतिषेधामो द्वितीयेसत्तां किन्तु पारमार्थिकीम्(१) । अन्योन्याभाव पृथक्त्ववैधर्म्य भिन्नलक्षणयोगित्वलक्षणस्यचतुर्विधस्यापि भेदस्य "प्राग्लोपा विनिगम्यत्व प्रमाणापगमैर्भवेत् ! अनवस्थितिमास्थातुरचिकित्सात्रिदोषता,, इत्यादिभिः खण्डनखाद्ये, प्रत्यक्तत्त्वप्रदीपिकाया(२)द्वितीयपरिच्छेदे विस्तरेण प्रत्याख्यातत्वात् । नचैवं द्वैतप्रपञ्चस्य मृषात्वेकथङ्कारमसताश्रुत्यादिप्रमाणेनाद्वैतं ब्रह्मसिद्ध्येदितिवाच्य मादर्शस्थवदनदृष्टान्तेनासतोऽपि सत्साधकत्वस्याद्वैतसिद्ध्यादौ व्यवस्थापनात् । नच प्रत्यक्षादि प्रमाणानामत्रविरोधः शब्द प्रमाणानां तदपेक्षयाबलीयस्त्वात् । युक्त्यादयश्चतत्सहकारिभूता इति ॥ यद्वा 'शुद्धः, कल्मषाप्रयोजको, 'मतिं

(१) पारमार्थिकसत्त्वसमानाधिकरणभेदाप्रतियोगित्व मद्वैतमिति न सिद्ध्यद्विद्भ्यां व्याघात इत्याशयः । (२) चित्सुखी ।

भेदो, ज्ञानविशेषो, यस्य, अन्यत्र 'शुद्धया'ऽनवच्छिन्नया 'मत्या, चैतन्येन भेद इतरेभ्यो व्यावहारिकोयस्येत्यर्थः । अन्तःकरण तद्वृत्त्याद्यनवच्छिन्नस्यैवहि चैतन्यस्य ब्रह्मात्मता "नित्यं विज्ञान मानन्दं ब्रह्म,, इति (तै-भृ-व-) श्रुतेः विज्ञानपदेनहि निरुक्तमेवा भिधीयते चैतन्यम् अन्तःकरणावच्छिन्नस्यचतस्य प्रमातृचैतन्यत्वं, तद्वृत्त्यवच्छिन्नस्यच प्रमाणचैतन्यत्वं, विषयावच्छिन्नस्य च प्रमेयचैतन्यत्वं मायावच्छिन्नस्यचेश्वरत्व मित्येभ्यो भेदस्तस्यशुद्धतयेतितात्पर्यम् तदुक्तं "मोहातीतोविशुद्धोमुनिभिरभिहितो मोहसङ्क्रान्तमूर्तिः । साक्षीस्वान्तेतदुत्थेप्रतिफलितवपुर्गीयतेऽसौ प्रमाता, वृत्त्यारुढः प्रमाणंफलमपिधिषणावृत्तिसंव्याप्तचैत्यो पाधिर्मोहोत्थशब्दप्रमुखविषयगःस्यात्प्रमेयः परात्मा इति,, स्फुटमेतद्वेदान्तपरिभाषायामपि। "भेदो द्वैधेविशेषेस्या दुपजापे विदारणे,, इति मेदिनी विश्वप्रकाशौ ॥ 'अमृतस्येव, सुधायाइवानन्दना प्रकृतिः शीलंयस्य, अन्यत्र अमृतं मोक्षः निरतिशयसुख मितियावत् तदेव प्रकृतिस्स्वरूपं यस्य "तं विद्याच्छुक्र ममृतम्,, इति (क०२अ-) " योवैभूमातदमृतम् इति (छा-७-प्र-) श्रुतिभ्याम् । नचैवं मोक्षस्य साध्यत्वाभावेन तमुद्दिश्य श्रवणादौ प्रवृत्तिर्नजायेतेतिवाच्यं, सिद्धत्वेपितस्यासिद्धत्वभ्रमेण तदुपपत्तेः । दृष्टश्चलोकेऽपि विस्मृतस्वकण्ठगतसौवर्णभूषण स्तदवाप्तयेप्रवर्तमानः । ननूक्तसुखस्य मोक्षत्वे प्रमाणाभाव इतिचेन्न, "ब्रह्मविद्ब्रह्मैवभवति,, इति (तै-) श्रुतेः। यत्तु वैषयिकानन्दस्य मुक्तित्वमुक्तं, तत्र मुक्तिदशायां भेदापत्तौ "यत्रत्वस्य सर्वमात्मैवाभूत्,, इति (बृ.) श्रुति विरोधो दुष्परिहरएवस्यात् । किञ्च तत्राभावेनशरीरस्यतज्जन्यमात्रमुदितानन्दो नोत्पत्तुमीष्टे, नचतत्रशरीरमपि कल्पयितुंशक्यम्, "अशरीरंवावसन्तं प्रियाप्रियेनस्पृशतः,, इति (छा.) श्रुतिविरोधापत्तेः । नवालोकान्तरगमनमपि सम्भवतिब्रह्मविदां, "न-

तस्य प्राणाउत्क्रामन्ति अत्रैव समवलीयन्ते,, इति (छा.) श्रुतेरिति । अथवा 'अमृता, नित्या, प्रकृतिर्यस्येत्यर्थः । नित्यत्वंचास्य परिच्छेद-राहित्यात्सिद्धम् यद्देशतः कालतोवस्तुतोवा परिच्छिद्यते तदनित्यं यथा घटादिक मितिव्याप्तिः नचेदंतथा, तस्मान्नतथेति । प्रमाणञ्चात्र "एष-महानजआत्माऽजरोमरोऽमृतोऽभयोब्रह्म,, इति [वृ.४] श्रुतिरपि । अथवा ऽमृतप्रकृतिरितिपदं, तत्र प्रकृते ऽमृत स्तत्सदृशः, प्रकृतिः, प्रकृष्टाकृतिः व्या-पारो यस्यसः । दृश्यन्तेच तत्सदृशेऽपितत्प्रयुक्तयः यथा आदित्योयूपः, अग्निर्माणवकः यजमानः प्रस्तरः, गौर्वाहीक इत्यादयः, सादृश्यश्चानन्द-कत्वेन । परत्र 'अमृतं, मुक्तिस्वरुपमविनाशिवा "अविनाशीवाअरे अ-यमात्मा,, इति (बृ.) श्रुतेः प्रकृति, रुपादानं निमित्तंवा, "यतोवा इ-मानिभूतानिजायन्त,, इति (तै.) श्रुतेः । अभिहितंचैतत् "जन्माद्यस्य-यतः,, (१अ.प्र.पा.२सू.) "प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्,, (१अ. ३.पा.सू.) इति वैयासिकसूत्रभाष्येश्रीशङ्करपादैः । तयोराद्यंद्विविधं विव-र्तोपादानत्व परिणामोपादानत्वभेदात्, तत्रप्रथमं ब्रह्मणः विषमसत्ताक का र्यापत्ते विवर्तत्वात्, द्वितीयन्त्व विद्यायाः समसत्ताक कार्यापत्तेः परिणा-मत्वात् ॥० श्रेयोमनीषमिति । श्रेयसि पुण्ये श्रेयसी श्रेष्ठावा 'मनीषा' मतिर्यस्येत्यर्थः । श्रेयसिकैवल्ये मनीषायस्येतिवा निश्शेषसुखखद्योतिका-मैहिकी मामुष्मिकीमपि दुःखानुषङ्गिणी माकलयन्तः केवलं कैवल्यमेवाता दृश माकलय्यतदर्थं प्रयतन्तेसाधवः, प्रतिपादितश्च पातञ्जलदर्शनस्य साधन पादेसर्वस्य मुख्यगौण साधारणं दुःखत्वं "परिणाम ताप संस्कारै र्गुण वृत्ति विरोधाच्च दुःखमेवसर्वं विवेकिन,, इतिसूत्रेण, [१५] दुःखविभाग प्रकरणेच न्यायवार्तिककारैः । अन्यत्र श्रेयस्साधनत्वाच्छ्रेयसी मुक्तिकारि-णी, मनीषा ज्ञानंयस्येति "श्रोतव्यो मन्तव्यो निदिध्यासितव्य स्साक्षा

स्कर्तव्यश्च,, इति (वृ०) "तमेवविदित्वाऽतिमृत्युमेति,, इति [पु० सू०] "ब्रह्मविदाप्नोतिपरम्,, इति (तै०ब्र०व०२) श्रुतिभ्यः। तत्र चतुर्णां श्रवणादीनां प्राधान्यं पूर्वपूर्वापेक्षयोत्तरोत्तरस्य विज्ञेयम्। श्रवणमनननिदिध्यासनेषु प्रथमं प्रधान मितरयोस्त्वाराढुपकारक तयाङ्गत्व मितिकेचित्। मोक्षहेतुत्वञ्चतस्याविद्यादिसकलद्वश्य निवृत्तिद्वाराऽवसेयं, नचजन्यत्वेन ब्रह्मरूपतामवाप्तु मशक्नुवत्या स्तस्याअविनाशेऽद्वैतभङ्गः, विनाशेचानवस्थाप्रसङ्ग इतिवाच्यं, तत्त्वज्ञानस्या विद्यादिसकलद्वश्याश्रय कालपूर्वत्त्वा भाव नियमादिति॥ "पुण्यश्रेयसी सुकृतं,, "श्रेयोनिःश्रेयसामृतं,, श्रेयान् श्रेष्ठः पुष्कलस्यात्, इत्यमरः॥०॥ अतिहृद्य मुपकारकत्वा त्परमाभीष्टं जनानां,परत्रापि आनन्दात्मकत्वेन, "विज्ञानमानन्दं ब्रह्म,, इति [तै.आ] "आनन्दोब्रह्मेतिव्यजानात्,, इति [तै.आ.] "एतस्यैवानन्दस्यान्यानि भूतानिमात्रा मुपजीवन्ति इति (तै.) श्रुतिभ्यः। नचैवम् "आनन्दो ब्रह्मणोरूपंतच्चमोक्षेप्रतिष्ठितम्,, इतिस्मृतिविरोधः! तस्याश्श्रुत्यपेक्षयादुर्बलत्वात् "औदुम्बरीं स्पृष्ट्वोद्गायेत्,, इति श्रुते "स्सासर्वा वेष्टयितव्या,, इति स्मृत्या विरोधे प्राप्ते श्रुतेः प्राबल्यं स्मृति विरोधाधिकरणे "विरोधेत्वनपेक्षंस्या दसतिह्यनुमानम्, इत्यनेन (न्याय० १अ.) भगवता जैमिनिना सिद्धान्तितम्। नचतथापि "आनन्दं ब्रह्मणो विद्वान ,, इति (क०) श्रुतिविरोधः, गुणगुणिभावसम्पादकस्य समवायस्य "समवायाभ्युपगमाच्च साम्यादनवस्थितेः ,, इति (ब्र२अ० पा०) सूत्रभाष्यभामत्यां विस्तरेण प्रत्याख्याततयोक्तश्रुते रारोपितभेद विषयकत्वात्। प्रकृतमनुसरामः अन्तःकरणपरिणामात्मकस्य सुखस्य क्षयित्वेन दुःखसम्भिन्नत्वेनच हेयत्वमेव, ब्रह्मणश्च केवलनित्य निरतिशयसुखात्मतया युक्तमेवाति प्रियत्वम् "सोऽन्वेष्टव्यः सोविजिज्ञासितव्यः,, इति (छा०) श्रुतेः। यद्वा

प्रस्तुते हृदि मनसिभवं हृद्यमिति व्युत्पत्त्या हृद्यं मनोज, मतिक्रान्तं जित कामं जितेन्द्रिय मितियावत् । इतरत्र हृद्यं ज्ञानादि मनोधर्म भूतं तस्यैव परिणामात्मकम् "काम स्सङ्कल्पो विचिकित्साश्रद्धाऽश्रद्धा धृति रधृति र्ह्रीर्धीर्भी रित्येतत्सर्वं मनएव ,, इति " विज्ञानं यज्ञं तनुते, इति, (तै० ] श्रुतिभ्यां मनसएव सुखदुःखाद्यखिलानर्थाश्रयत्वप्रति पादनात् । यद्यप्येतत्क्षेत्रज्ञसाधारणत्वादव्याख्येयं, तथापि ज्ञानसुख दुःखेच्छाकर्तृत्वबन्धाश्रयाहङ्कारतादात्म्याध्यासानधिष्ठानत्वरूपस्यातिक्रान्तपदार्थस्य विवक्षितत्वेन नोक्तापत्तिः, भवतिहि अहंजानामि सुखी दुःखीच्छामि करोमीति व्यवहारः । " स्वान्तं हृन्मानसंमनः,, " अभीष्टं दयितं हृद्यम् ,, इति हृद्यं धवलजीरेच हृत्प्रिये हृद्भवेऽपिच ,, इत्यमर विश्व प्रकाशौ ॥ अथवा " अति हृद्यं ,, प्रशस्तहृद्यम्, एतदेकविधमेव पक्षद्वितयसाधारणम्, इतरेष्वपि यद्यपिहृद्य—त्वमात्रमस्ति, परञ्च प्राशस्त्य मस्मिन्नेवेत्याशयः ॥ यद्वा 'हृद्यं, हृदिष्ट कारकम् " हृद्यं जवनेऽथत्रिषु हृज्ज हृद्धित हृत्प्रिये,, अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽपिच,, इतिमेदिनी ॥ यद्वा अतिहृत् मनोऽतिक्रान्तं, मनोऽगोचर इतियावत् यंज्ञानात्मकम् "यन्मनसा नमनुत,, इतिश्रुतेः, "अवाङ्मनसगोचरम्,, इतिस्मृतेः, "यतोवाचो निवर्तन्ते अप्राप्यमनसासह,, इतिगीतानिरुक्तेश्च । साधुपक्षेऽतिहृत् यो यशोयस्येत्यर्थः मनसाप्यालोचनानर्हं यशस्क इति विवरणम् "यशोयः कथितः प्राज्ञैर्यो वायुरिति शब्दितः । याने यातरि यस्त्यागे कथित इशब्दवेदिभि रित्येकाक्षर कोशाभिधानात्, नचैतस्य ज्ञानार्थकत्वं नायात मितिदेश्यं, "येगत्यर्था स्तेज्ञानार्था ,, इति वचनेन यानशब्दस्य ज्ञानार्थकत्वस्यान पायात्, अतएवाततेे स्सार्वकालिकगमनाभिधायकत्वेऽपि अततीत्यात्मेति योगेनात्मपदस्य ज्ञानाश्रयवाचकत्व मनेकत्रोपपादित साधुसङ्गच्छते ॥१॥

परमार्थसत्प्रवृत्तीति, परमोऽर्थोयस्मात् यस्येतिवा, आद्येऽर्थपदं प्रयोजन परं प्रकृष्टप्रयोजनसम्पादक मिति यावत्, द्वितीये निवृत्तिपरं, साच वाच्य विषयात् । सन्, साधुः, नचानन्वयप्रसङ्गः उद्देश्यताया विधेयतावच्छेद-केनावच्छीढत्वा दितिदेश्यं पक्त्वापचतीत्यादि वाक्य प्रामाण्यानुरोधेन क्विञ्चिद्भागस्याप्यपूर्वत्त्वे विशिष्टस्य विधेयत्वसम्भवेन विधेयांशेऽधिकाव-गाहिन श्शाब्दबोधस्या भ्युपगन्तु मुचितत्वात् । 'सन्, प्रशस्त इतिवा विद्यमान इतिवा, सुधीरितिवा, । एतेनै कत्रार्थे सत्पदस्य द्विधोपादाने, "रतलीलाश्रमं भिन्ते सलीलमनिलोवहन्,, इत्यादाविव कवे निर्माण सा-सामग्री दारिद्र्यस्योन्नयनेन श्रोतुर्विमुखतापादनेनच कथितपदत्वस्य दो-षताप्रसक्ति रिति निरस्तम् । एतस्यच समासेऽपि सम्भवेन पददोषतायाः प्रसङ्गे वाक्यदोषतैव कथमालङ्कारिकैरभि हितेत्यन्या विचारणेत्युपरम्यते ॥ प्रकृष्टावृत्तिः प्रवृत्ति राचरणं यस्य, नहि साधवो निषिद्धमाचरन्ति । सती प्रवृत्तिर्यस्येतिवा । 'परमार्थसती, परमार्थानुकूला प्रवृत्तिर्यस्येतिवा । परस्य मार्थे सम्पत्तये सत्प्रवृत्ति र्यस्येतिवा । प्रकृष्टाभिधेये 'सति, वृह्मणि प्रवृत्तिर्यस्येतिवाऽर्थः । अन्त्ये साक्षात्कारानुकूलत्वं सप्तम्या बोध्यते । " अर्थः प्रकारे विषये वित्तकारणवस्तुषु, अभिधेयेऽपिशब्दानां निवृत्तौच प्रयोजने,, इति विश्वप्रकाशः । "सन् साधौ धीर शस्तयोः । मान्ये सत्ये विद्यमाने त्रिषु साध्व्युभयोः स्त्रियामिति मेदिनी । " ॐ तत्स-दितिनिर्देशो वृह्मणस्त्रिविधः स्मृतः, इति भ० गीता । परत्र 'परमार्थसत्, कालत्रयाबाध्यं, "तस्यहवा एतस्य वृह्मणोनामसत्यम्,, इति (छा०) श्रुतेः "सत्यंज्ञान मनन्तं ब्रह्म,, इति [तै०] श्रुतेः, " सच्चिदानन्दविग्रहम्,, इतिस्मृतेश्च सत्यत्वस्य मिथ्यात्वाभावतया तस्यच बाधितत्वात्मत्वेन निरुक्त स्वरूपात्, वर्सतेव पारमार्थिक व्यावहारिक प्रातीतिकसत्ता भेदेन

त्रिविधासत्तौपनिषदां, तासु प्रथमा ब्रह्मणः, द्वितीया घटादीनां, तृतीया शुक्तिरुप्यादीनाम्, घटः सन्नित्यादि प्रतीतिस्तु व्यावहारिकी मेव सत्तां गोचरयति । नचाकाशादीनांन्यायनयइवे हाऽपि कालत्रितयाबाध्यत्वं, "तस्माद्वा एतस्मादात्मनआकाश स्सम्भूत,, इति [ तै० ] श्रुतेः "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच खं वायुर्ज्योति रापश्च पृथिवी विश्वस्य धारिणी,, इति [ ई० ] श्रुतेः तदित्थमेतेषां संक्षेपतस्सृष्टिप्रक्रिया, यथोक्तस्वरूपाया मायायाः परमेश्वरीयेक्षण सङ्कल्पप्रयत्नात्मिकाभिः वृतिभि रपञ्चीकृतानि तन्मात्र पदप्रतिपाद्यानि त्रिगुणान्याकाशादीनि पञ्चभूतानि, तेषु सत्वगुणोपेते नैकैकेन यथाक्रमं पञ्चज्ञानेन्द्रियाणि, मिळितैश्चतैरुक्तगुणवद्भि र्मनोबुद्ध्य हङ्कारचित्तानि, रजोगुणोपेतेन चैकैकेन यथाक्रमं वागादीनि पञ्चकर्मेन्द्रियाणि, मिळितैश्चतै रुदितगुणाश्रयैःप्राणद्यः पञ्चवायवः, तमोगुणोपेतैश्चतैः [ १ ] पञ्चीकृतानि भूतानि, तैरेवापञ्चीकृतभूतैः महत्तत्त्वाख्यातं हिरण्यग(२)र्भशरीरंपर महङ्काराख्यात मस्मदादि शरीरमपरमिति द्विविधं परलोक प्रयाण निर्वाहकं मोक्षपर्यन्तस्थायि मनोबुद्धि द्विविधेन्द्रिय प्राणादिपञ्चकसंयुक्तं लिङ्गशरीरं, तमोगुणोपेतैः पञ्चीकृतभूतै श्चतुर्दशभुवनात्मकं ब्रह्माण्डं चतुर्विधं स्थूलशरीरंचजायन्ते ॥ नवा परमाणोरपि पुरोदितावाध्यत्व मनभ्युपगमात् तत्रहिक्रियायास्संयोगस्य चोपपादन मशक्यमेव, किञ्चावयवावयविभावोऽपि दुरुपगमः समवायानङ्गीकारात् अवयवापेक्षयाऽवयविनि गुरुत्वस्याधिकस्य प्रसङ्गाच्च तदेतत्प्रत्यपादि तर्कपाद भामत्याम् "उभयथापिनकर्मातस्तदभावः,,

---

(१)पञ्चीकरण प्रकारश्च पञ्चदश्यां "द्विधाविधाय चैकैकंचतुर्धाप्रथमजरपुनः । स्वस्वेतर द्वितीयांशे योजनात्पञ्च पञ्चते, इति ।



(२) हिरण्यगर्भश्च मूर्तित्रयादन्यः प्रथमो जीवः ।

"समवायाभ्युपगमाच्चसाम्यादनवस्थितेः,, इत्यादि वैयासिकसूत्र भाष्य व्याख्यानावसरे विस्तरेण वाचस्पतिमिश्रैः। अथवा 'परमो, नित्यः अर्थः पुरुषार्थो यस्मात् मोक्षजनकज्ञानविषय इत्यर्थः, अर्थादिषु चतुर्विधेषु पुरुषार्थेषु त्रयाणां प्रत्यक्षेण श्रुत्याचानित्यत्वस्याधिगतेः साच "तद्यथेह कर्मचितोलोकः क्षीयते एवमेवामुत्र पुण्यचितोलोकः क्षीयते,, इति ( मु० ) मोक्षस्यच नित्यनिरतिशय सुखात्मक ब्रह्मरूपतेति । 'सत्, यथोक्तस्वरूपं, नतुतार्किकाभ्युपगतेन सामान्येन कालोपाधिसम्बन्धित्वेनवा सत्त्वेनोपेतं, तयो स्सर्वत्र सत्मदित्यनुगताकारकप्रतीते रुपपादकत्वा सम्भवेन सामान्यस्यच कार्य कारण भावस्याति प्रसक्ततया ऽवच्छेदकत्वेन साधयितुमशक्यतयाच सत्त्वस्योक्त रुपत्वकल्पनाया अयोगात् मन्मतेत्व द्वितीय ब्रह्म तादात्म्याध्यासेनैव सर्वत्रोदितप्रतीते रुपपादनं सुकरमेवेति ॥ अत एव प्रकृष्टावृत्तिः स्थितिर्यस्यतत् इतरेषान्तु जड़त्वेन वृत्तिव्याप्यत्वेनवा किञ्चित्कालावच्छिन्न चित्तादात्म्येनवा स्वातिरिक्त सम्विदपेक्षाव्याप्य स्वव्यवहारकत्वेनच, स्थितौ प्रकर्ष विरहात् "सवाएष महानजआत्मा,,इति श्रुतेः॥ एवंसति ब्रह्माभिन्नं सज्जनात्मकं वस्तु जयति। भावध्वनिः। तस्यच श्लेषभित्तिकेन रूपकेण व्यज्यमानाया उपमालङ्कृते ब्रह्मविषयकरतेश्चाभिव्यक्ति रङ्गम्। एवञ्च प्रेयोलङ्कारोऽपि,, गीतिकावृत्तम् ॥ ७ ॥

काव्यकृत्वङ्ग वैगुण्य प्रतिपत्ति परायणः।
न वारणीयः केनापि यातुधानाधिकः खलः ॥८॥

आख्यायिकाङ्गतया खलवृत्तं वर्णयति काव्येत्यादिना, दोषैर्विधुरं गुणालङ्काराभ्यामन्वितं शब्दार्थोभयंकाव्यम्, ननु दूषितेऽपिकाव्यताया उपगतत्वेन, दुष्टकाव्य मितिव्यवहारेण, नीरसेऽपि निरलङ्कारेऽपि वाक्यविलसिते का-

व्यत्वस्य महाकवि सम्प्रदायसिद्धत्वेन नैतत्प्रकाशोक्तं लक्षणं सम्भवतीति-चेत्, अत्राहु रुद्दद्योतकाराः विलक्षणास्वादव्यञ्जकत्वस्यैव तल्लक्ष्यतावच्छेदकत्वाद् दूषितादौतदभावेन नानुपपत्तिः, काव्यंश्रुतं काव्यमधिगत मित्यादिव्यवहारस्य शब्दार्थयुगले काव्यपदशक्ति ग्राहकस्य सद्भावेन "श्लोकवाक्यं न काव्यम्,, इतिव्यवहारस्य शब्दमात्रेलक्षणाश्रयणेनानापादनीयत्वात्, काव्यसामान्यलक्षणन्तु चमत्कारित्वेसति शब्दार्थोभयत्वं तेन नगौरस्तीत्यादौ काव्यत्वप्रसक्तिः दुष्टादपि काव्यादपकृष्ट चमत्कारोजायतएवेतिनाव्याप्ति रिति विभावनीयमेतत् । तदेव चतुर्वर्गप्रदत्वात् क्लेशातिशयसाध्यत्वाच्चक्रतुः यागः अतादृशकाव्ये क्रतुत्वारोपस्यायुक्तत्वात् । रूपकालङ्कारः। तदङ्गानां दोषव्यतिरेक गुणालङ्काराणां वैगुण्यस्यासद्भावस्य प्रतिपत्तौ परायणः व्यापारान्तरपरीहारेण तत्रैव प्रवृत्तः, राक्षसोऽपियागाङ्ग वैगुण्य सम्पादनपरायणः परञ्चासौ मन्त्रादिनाबलेनच शक्योवारयितुं, खलस्तु न केनापिजनेनोपायेनचातथा अतएव ततोऽधिकः । अत्र रूपकश्लेषोपजीवितेन व्यतिरेकालङ्कारेण स्वतस्सिद्धेन खलविषयिणीनिन्दा वस्तुरूपा व्यज्यते ॥ ८ ॥

---

(१) यत्तु रसवतो वाक्यस्यैव काव्यत्वमुपयन्तिकेचित् तच्च बालविलसितजलभ्रमिवर्णनादाव प्रसक्त्यानादरणीयम् । रसगङ्गाधरकृतस्तु यत्प्रतिपादितार्थ विषयकभावनात्वं व्याप्यचमत्कारत्वापरपर्यायवैजात्यावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकं तत्त्वमेवकाव्यत्वं वेदत्वादिकमिव शब्दमात्रसाधारणमितिप्राहुः ॥ वक्रोक्तिमत्त्वमेवतत् । साचविलक्षणोक्तिः । नतु " अन्यस्यान्यार्थकं वाक्यमन्ययायोजयेद्यदि । श्लेषेण काक्वेति साहित्यदर्पणोक्तलक्षणा । वैलक्षण्यं च जातिरखण्डोपाधिर्लोकोत्तराह्लादजनकज्ञानगोचरत्वं वा । एतेन वक्रोक्तेरलङ्काररूपत्वेन काव्यलक्षणत्वेन विवक्षितु मशक्यत्वमव्यापकत्वादिति दर्पणकृतामाक्षेपोनिरस्तइति वक्रोक्तिकाराः ॥

भाति श्रौतविधानमेध्यवसुधोवैदेहदेशो बुधै
र्यस्मिन् व्यासतनूद्भवोप्यधिजगौचाध्यात्मविद्यां सुधीः ।
तत्राति प्रथितोऽस्ति सोदरपुराभिख्याविभूषान्वयोऽ-
मुष्याङ्केऽर्जितदिग्वनेऽत्रनिसुरस्सर्वोजनुर्वाञ्छति ॥ ९ ॥

आख्यायिकावयवतयाऽन्वयायादिकं स्वकीयं कीर्तयति, भातीत्या-दिना । ' श्रौतविधानैः, श्रुतिविहित क्रियानुष्ठानैः । 'मेध्या, पूता "पूतं पवित्रं मेध्यञ्च,, इत्यमरः, वसुधा यत्र, सः । तेन प्रकाशनयोग्यत्वं तदा श्रयत्वात्मकवाच्यार्थोपपादकतया गुणीभूतं व्यज्यते । अतएव परिकराल ङ्कारः । ' विदेह(१)स्य , सबीज(२)समाधे रसम्प्रज्ञात समाधिसाधनस्य तृती(३)यां विद्यां सानन्दाभिधानामासाद्याहन्तया तत्कार्यं भूतया मदीय-त्वविलक्षणया ममतया च विधुरीकृतस्य, जीवन्मु(४ क्तपदेनाभिधे यस्य वा, अयं वैदेहः " तस्येदम् ,, इत्यनेनाण् प्रत्ययः । नतुयस्यकस्यचिन्नृ-पस्य । देशः, मिथिलाभिधानः । वैदेहपदेन पुरोदीरितमेव योग्यत्वं ग-म्यते । तथाच परिकराङ्कुरालङ्कारः, प्रकृतार्थोपपादकचमत्कारिव्यङ्ग्य क विशेष्यवाचक पदत्वलक्षणस्य सद्भावात् " साभिप्राये विशेष्येतु भवे-त्परिकराङ्कुरः। चतुर्णां पुरुषार्थानां दातादेवश्चतुर्भुजः,, इति दीक्षितोक्तेः।

---

१ विगतः देहः तदभिमानोयस्येतियोगार्थः ।

२ सम्प्रज्ञाताभि धस्य, 'समाधेः, क्षिप्तमूढविक्षिप्तवृत्तिनिरोधस्य, " योगश्चित्तवृत्तिनिरोधः" इति पातञ्जलदर्शनसूत्रस्यभाष्ये " सर्वशब्दाग्रहणात् सम्प्रज्ञातोऽपियोग इत्याख्यायते " इति व्याख्यानात् , यत्किञ्चिच्चित्तवृत्तिनिरोधस्याति प्रसञ्जकत्वात् ॥

३ तथाहि सम्प्रज्ञातश्चतुर्विधः सवितर्कः सविचारः सानन्दः सास्मितश्चेति ॥

४ जीवन्मुक्तस्वसाक्षात्कृतात्मतत्त्वः सवासनमिथ्याज्ञानोत्कटरागद्वेषैर्विमुक्तः अदृष्टोत्पादरहितः प्रारब्धकर्मोपभुञ्जानः विनष्टं समाधिप्रभावाद्युगपद्भोक्ष्यमाणं चाकायव्यूहेन तदितरत् कर्मसामान्यं पश्यता दृशः ॥

सत्येवं परिकर परिकराङ्कुरालङ्कारयो स्संसृष्टिः । काव्यप्रकाशकृतस्तु ए(१)तमलंकारंनाधिक तयाऽऽतिष्ठन्ते, पूर्वाभिहितव्यङ्ग्यक पदत्वलक्षणेन परिकरलक्षणेन तदङ्कुरस्यापिलक्षित तया तत्रैवान्तर्भावसम्भवादितिवि-भाव्यम् । बुधैः, पण्डितैः । नतुएकेनतेन । भाति, दीप्यते । नतुतैरुपलक्षितः केवलमस्ति । बुधेषु दीपनकरणत्वाभिधायकतृतीया श्रुत्या प्रकर्षः प्रतीयते, यतोऽपकृष्टैस्तै ग्रामस्य गेहस्यापिवा दीप्तिर्नसम्भवति, किमुतजनपदस्य । यस्मिन्देशे सुधीः व्यासस्य अष्टादशपुराणप्रणेतुः भगवदवताररूपस्य, नतुसाधारणस्य, तथाच पाण्डित्यातिशयोऽर्थान्तरसङ्क्रमितवाच्यध्वनिः । निरुक्तविशेषणाद्युपेतेबादरायणेऽर्थेव्यासपदस्य लक्षणावृत्तेराश्रयणात् । अन्यथातत्पदोपादानवैयर्थ्यम् । अतएव “त्वामस्मिवच्मिविदुषां समवायोऽत्रतिष्ठति । आत्मीयां मतिमास्थायस्थितिमत्रविधेहितत्,, इत्यत्र त्वामस्मिवच्म्यात्मीयपदाना मनुपयुक्तार्थतयोपदेश्यासत्त्वोपदेशप्रमाणपरि गृहीतत्वात्मकार्थान्तरसंक्रमितवाच्यकतयाऽवश्यवाच्याहिताहितत्वाद्यर्थ व्यञ्जकत्वं काव्यप्रदीपप्रभायां तुरीयोल्लासे प्रतिपादितम् । ‘तनूद्भवोऽपि नतुक्षेत्रजोऽपि शुक्राचार्यः, तत्र पितुर्गुणसंक्रमणासम्भवात् । किमुतान्यः । ‘अध्यात्मविद्याम्’. अष्टादशविद्यास्थानेष्वभ्यर्हिततमाम् अतिदुरवबोधां वेदान्त विद्याम्, नपर मन्य विद्याम् “ अध्यात्मविद्याविद्यानाम्,, इति भगवद्गीता । आत्मनीत्यध्यात्मम् “अनश्च,, इत्यनेन अव्ययीभावाट्टच् । अधिजगौ, अध्यैष्ट । पुरोक्तरीत्याऽर्थां पत्त्यलंकारोव्यङ्ग्यः तेनच प्राशस्त्यंदेशस्य तथा एवञ्चवर्णनीयतया प्रस्तु तस्य देशस्य बुधकरणिकया दीप्त्यावैयासक्यादेरध्ययनेन वर्णितेनकारणेन तद्देशोत्पन्नेकुलेप्राशस्त्यं कार्यभूतं प्रतीयत इति प्रस्तुताङ्कुरालंकारः “प्रस्तुतेन प्रस्तुतस्यद्योतने प्रस्तुतांकुर,, इत्यभिधानात्

१ परिकराङ्कुर ॥

पुरा किलवैयासकिः पितुरनुज्ञयाऽऽयाय मिथिलायामध्यात्मविद्यां राजर्षेर्जनकादधीतवा नितिपौराणिकीप्रवृत्तिः। 'तत्, यथोक्तेदेशे। 'अतिप्रथितः। विख्याततरः।'सोदरपुराभिख्यायाः, सोदरपुरेतिग्रामनामधेयस्य, विभूषाभूतः' नतुभूषणमात्रम्। 'अन्वयः, वंशः। अस्ति। "अभिजनान्वयौ" इत्यमरः। नतुवंशस्यविभूषातन्नामेति। तेनापिवंशस्य श्रेयस्त्वं द्योत्यते। 'अमुष्य, यस्यअर्जितं दिग्वनं तदभिधानोग्रामोयत्, तस्मिन अंगे, एकदेशे सर्वैः, नतुकश्चिदेव, 'अवनिसुरः पृथिव्यां देवात्मको द्विजः, अनुः, जन्म, वाञ्छति। एतेनचानुभाव मुखेनसोदर पुरमूलक दिग्वन ग्रामोपलक्षितस्य कुलस्यातिज्यायस्त्वंव्यज्यते। इमेचव्यङ्ग्यार्थाः कविनिष्ठे श्रेष्ठत्वे प्रबन्धध्वनावङ्गभाव मासादयन्ति। एवमग्रेपिग्राह्यमिति भव तिसर्वथा सन्दर्भशुद्धिः म. स. र. न. म. य. (१) ल. ग. वर्णानां क्रमेण पादेषु न्यासात्। शार्दूल विक्रीडितंवृत्तम् ॥ ९ ॥

अत्रश्रोत्रियसद्गुणाग्रगणनोवाग्मीसमज्याव्रजे
कान्तश्शान्ततमोऽव्यलीकवचनोऽनूचानमुख्यः कृती ।
विख्यातेश्वरदत्तनाममहितो मिश्रोपनामोदितो
यत्कीर्तेस्सकलाकलासितरुचेर्द्यापिविद्योतते(जेगीयते)१०

अत्रेति। सोदरपुरान्वयस्य दिग्वनग्रामोपलक्षितेऽङ्गे 'श्रोत्रियाणां, श्रौतस्मार्तादिक्रियानुष्ठानपरायणतां विमलमानसतां साधुताञ्च परीक्ष्य महामहिममहितेन पुरातनेन मिथिलानृपतिना हरिसिंहदेवेन श्रोत्रियेति

---

१ मध्यगुरु, द्विलघुश्चनकारो, भादिगुरुः, पुनरादिलघुर्यः । जोगुरुमध्यगतो, रलमध्यः, सोऽन्त्यगुरुः, कथितोऽन्त्यलघुस्तः, इति गणानां लक्षणं विज्ञेयम्

पदेन सङ्केतितानां द्विजवर्य्याणां, सद्गणेषु 'अग्रा, प्रथमागणनायस्य, सः। असौ प्रथमतोद्विजः, तत्रापि श्रोत्रियः, तेषामपिसतांगणानामग्रे गणित, इत्यद्सीयमाहात्म्ये किं विशेषतोवक्तव्यम्। 'समज्यानां, सदसां 'व्रजे' समुदाये, नतुकस्याश्चिदेकस्यां तत्र, 'वाग्मी' वाचोयुक्तिपटुः। नतुवाचाटः। 'कान्तः' सुन्दरः, समज्याव्रजेकान्त इतिवा, नतु गेहेकान्तः। तेनच सौन्दर्यातिशयोव्यज्यते। 'शान्ततमः, अतिशयेनशान्तः, 'अव्यलीकं' सत्यं प्रियञ्च वचनं यस्य, सः। "व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि" इतिमेदिनी। "अलीकमनृतेऽपिच" इतिविश्वः। अथवा 'शान्तं' विलीनं, 'तमः' अज्ञानं, यस्य, सचासावव्यलीकवचन इति विशेषणयोः कर्मधारय इति। 'अनूचानानां, वेदेषु तदंगेषु च पण्डितानां विनीतानाञ्च, मुख्यः। "अनूचानो विनीतेस्यात्सांगवेदविचक्षणे" इति मेदिनी। 'कृती' पण्डितः योग्यश्च "कृतीस्यात्पण्डितेयोग्ये" इति विश्वप्रकाशः। 'विख्यातेन' प्रसिद्धेन, ईश्वरदत्तेतिनाम्ना 'महितः, पूजितः, अभिधेय इतियावत् माहात्म्यं द्योत्यते, सोऽयमत्यन्ततिरस्कृत वाच्यध्वनिः, अचेतनेन पूज्यत्वस्य बाधात्। यद्वा विख्यात इति पृथगेव विशेषणम्, पूर्ववत्समासः। अथवा विख्यातानांजनानामीश्वरः, 'दत्तं' दानम्, भावेनिष्ठाप्रत्ययः, तेनयत् नाम, तेनमहितः, दानजनितकीर्तिमानिति यावत्। मिश्रेत्युपनामयस्य, सः, ईश्वरदत्तमिश्र इति मिलितार्थः। 'उदितः, उत्पन्नः। 'सितरुचेः' धवलद्युतेः यस्यकीर्तेः, सकला, नतुकाचिदेव, 'कला' भागः, अद्यापि, नतुपुरैव, जेगीयते, अतिशयेनगीयते गैधातोर्यङ्। लोकैरितिस्फुटम्, अतएव न न्यूनपदत्व दोषप्रसक्तिः। अथवा विद्योतते इति पाठः, तत्रचनशङ्काप्युक्तदोषस्य। एतैश्चविशेषणै रतिपुष्कलत्वं मिश्रेऽभिव्यज्यते इति॥ १०॥

अभवत्तदात्मजन्मा सन्मान्योऽमलमानसस्सुधर्मा ।
रतिदत्तमिश्रनामा कामारिरतस्सदैकसद्धामः ॥ ११ ॥

अभवदिति । 'तस्य, ईश्वरदत्तमिश्रस्य, आत्मजन्मा, सतां साधूनां विदुषाञ्च मान्यः, 'अमलं, निस्कलुषं मानसं यस्य, सः । नचकलुषस्याधर्मस्य चेतनधर्मतया समेषामेव मनसितद्भावस्यसत्तया साधारण्येन न प्रशंसावहत्वमिति व्यपदेश्यम्,: स्वाश्रयसंयोगित्वस्याभावप्रतियोगितावच्छेदकसंसर्गत्वाभ्युपगमात् । यद्वा वेदान्तिमतेनेदम् तत्रचादृष्टस्यमनोधर्मतैवेतिनोदितदूषणावकाशः । 'सुधर्मा, शोभनोधर्मोयस्यासौतथा "धर्मादनिच्केवलात्" इत्यनेनानिच् । कामस्य अरौ शिवे 'रतः, भक्तः । एतेन त्रिभुवनवशयितृकामपरिपन्थित्वाभिधानेन व्यज्यमानमैश्वर्यं भक्तेर्गोचरत्वयोग्यतां द्योतयत्तां परिपुष्णाति । सदा एका 'सती' पतिव्रता, वामायस्य, सः, रतिदत्तमिश्रनामाऽभूदित्यर्थः । पूर्वश्लोकइव व्यङ्ग्यार्थो बोध्य इति ॥ ११ ॥

यश्शैशवे व्याकृतिमाप्रपद्य
व्युत्पत्तिवैशद्य मवाप सद्यः ।
स्वान्तं निशान्तं पुरभिन्निशान्तं
निर्माय निर्मायतया शमायात् ॥ १२ ॥

यइति । यो रतिदत्तमिश्रः 'शैशवे' बाल्ये, 'व्याकृतिं, व्याकरणम्, 'आप्रपद्य' समधिगत्य । 'व्युत्पत्ते वैशद्यम्, स्वच्छां निर्दूषणां व्युत्पत्तिम् सद्यः अवाप । तेनतीक्ष्णप्रज्ञत्वं गम्यते, सद्यस्तदवाप्ते स्तेन विनाऽश्रमभवात् । नितरां शान्तं 'स्वान्तं, मनः, 'पुरभिदः, हरस्य निशा

न्तं, मन्दिरं "निशान्त पस्त्य सदनम्" इत्यमरः निर्माय, विरच्य, अनिशं हरैकमनाभूत्वेति भावः । 'निर्मायतया, मायारहिततया 'शं, कल्याणम्, 'आयात्' प्रापत । हरैकमानसत्वस्य मायाराहित्यैकारणतया काव्यलिङ्गम् । निर्माय निर्मायेत्यत्र यमकालङ्कारः "सत्यर्थेपृथगर्थायाः स्वरव्यञ्जनसंहतेः, क्रमेणतेनैवावृत्तिर्यमकं विनिगद्यते" इति दर्पणोक्तेः समानार्थत्वाभाववत्समानानुपूर्वीकानेकवर्णावृत्तियमक मितितु परिष्कारिणां सरणिः, लाटानुप्रासवारणाय समानार्थत्वाभाववदिति । विभिन्नार्थकत्व निवेशे "समरसमरसोऽयम्" इत्यादौ द्वितीयावृत्तेर्निरर्थकत्वेनाव्याप्तिः प्रसज्येत, इति तदुपेक्षा । "सरोरस" इत्यादावतिव्याप्तिवारणाय समानानुपर्वीकेति । तथाविधवर्णद्वयेऽतिव्याप्तेर्व्युदासाय अनेकवर्णावृत्तीनीति संक्षेपः ॥ १२ ॥

तज्जातोधिषणावधीरितसुधीसन्दोहमोहप्रदः
स्वच्छान्तर्जितदर्पदर्पणमणि स्सन्तर्पणोजन्मिनाम् ।
पुण्यात्राग विहापिताखिलपणो राजत्समज्ञाचणो
लेभेसाधुवशंवदेन्द्रियगणो गोसाञिमिश्राभिधाम् ॥१३॥

तज्जातइति । तस्मात् रतिदत्तमिश्रात् जातः । 'धिषणया, बुद्धया, 'अवधीरितस्य, तिरस्कृतस्य, सुधियां सन्दोहस्य, मोहप्रदः । अमुष्य प्रज्ञातिशयं समधिगत्य सर्वएव सुधियोमुह्यन्तीति महामतित्वं व्यङ्ग्यम् । यद्वा धिषणयाऽवधीरितः सुधीसन्दोहोयेन तथाभूतस्सन् 'मोहम्' अविद्यां, प्रकर्षेणद्यति खण्डयति निवर्तयतीतियावत् तादृशः । अथवा धिषणाया अवधिः, काष्ठांप्राप्तः निरतिशयबुद्धिमानितिफलितार्थः, अतएव 'ईरितः, कम्पितः सुधीसन्दोहोयेन सचासौ मोहप्रदः, 'मायाः सम्पत्तेः,

'ऊहः, 'तर्कः, तत्प्रदः, सम्पत्तिप्राप्त्युपायशिक्षक इत्यर्थः एतेन नीति-ज्ञत्वं द्योत्यते । 'मस्य, शिवस्य, 'ऊहः, तर्कः, तत्प्रदः, शिवसाधकृत-कौंपदे शितेरिवा । सच सर्गाद्यकालिकंद्व्यणुकं यदि स्वोपादानगोचराप-रोक्षज्ञानादिमज्जन्यं नस्यात्, तर्हिकार्यं नस्यादित्यादिरूपोन्यायकुसुमा-ञ्जलौ प्रतिपादितः "मश्शिवश्चन्द्रमावेधा मालक्ष्मीश्चप्रकीर्तिता" इत्यभि धानात् । स्वच्छेन 'अन्तः, अन्तः करणेन जितः 'दर्पो, विमलत्वदर्पो यस्य तथाविधः 'दर्पणमणिः, उत्कृष्ट आदर्शः दर्पणः मणिश्चेति वा येन सः, तदधिक धवलमानस इति भावः । व्यतिरेकालङ्कारः । जन्मिनां नतुतद्विशेषाणामेव, 'सन्तर्पणः, तृप्तिकारकः, सर्वभूतोपकारीतिभावः । "सौहित्यंतर्पणंतृप्तिः" इत्यमरः । पुण्याचारेण, नतु अन्यथा, 'विहा-पितः, विसर्जितः, अखिलः 'पणः, धनं, येन तादृशः । दातृयष्टृत्वा-दिमत्वं व्यज्यते । "पणोवराटमानेस्यान्मूल्ये कार्षापणेग्रहे । क्रय्यशाका-टिकाद्यूतव्यवहारे भृतौधने इति मेदिनी ॥ अतएव राजन्त्या 'सम-ज्ञया, कीर्त्या, चणः, ख्यातः, "तेनवित्तश्चुञ्चुप्चणपौ" इत्यनेनचण-प् । पदार्थ हेतुकं काव्यलिङ्गम् । 'वशम्वदः, आयत्तः, "प्रियवशे वदः खच्,, अरुर्द्विषदित्यादिना मुम् इन्द्रियाणां चक्षुरादीनां वागादीनां च, गणोयस्य तथा भूतः, इन्द्रिय विजेतृत्वं स्फुटतरतया व्यज्यते । अतएव गोस्वामिमिश्रेत्यभिधां साधु, सम्यक्, लेभे । गोस्वामिपदं हि इन्द्रियस्वामिनं बोधयति, स्वामिपदस्य साम्रीतिरूपं भवति प्राकृते । का-व्यलिंगं निरुक्तिश्चालंकारौ । "निरुक्तिर्योगतोनाम्नामन्यार्थत्वप्रकल्पनम्" इति दीक्षितोक्तेः । तथाचाभिहितानां त्रयाणामलंकाराणां संसृष्टिः । न-चात्रोपहतविसर्गत्वं वाक्यदूषणं शंकितुं शक्यम् । अव्यवधानेन पूर्वाप-रीभावभाजां त्रयाणांपदानां मोरवमोतविसर्गत्वएव निरस्तद्वतस्मस-

क्त्या प्रकृते तदभावात् । अतएव "श्वपाकोजल्पाको भवतिमधुपाकोपम-गिरा, निरातंकोरंको विहरति" इत्यादौ भवतीत्यादिनागिरेत्यन्तेनव्य-वधानान्नोदित दूषणप्रसंगः । अभिहितञ्च "प्रतिकूलवर्ण मुपहतलुप्तविसर्गं विसन्धिहतवृत्तम्,, इति काव्यप्रकाशकारिकाव्याख्यायां "तेननैरन्तर्येणो त्वमाप्तबहुविसर्गत्वं तथा लुप्तविसर्गत्वं च इति प्रदीपकारैः । अथवा "वि द्रापिताखिलघन स्वसंज्ञासमज्ञा ,, इतिपाठः । अत्रचनैतद्दोपस्योन्मेषोऽपि । 'संज्ञया, निजनाम्ना, समज्ञयाच चणइत्यर्थः । साचेयंख्यातिरुत्तमा, पितुर्नामादिनाख्याते रनुत्तमत्वबोधनादिति ॥ १३ ॥

दृप्यद्द्वेषणदन्तिदारणहरे रज्यत्प्रतापानल
ज्वालाजातवदातकीर्ति हिमगु प्रोद्भासितज्यापतेः ।
यस्साचिव्यपदं प्रसाध्यमिथिलाभूपात्मजस्यातुलं
कंवा नोपचकारयोऽनु दिवसं नोकेन संस्मर्यते ॥ १४ ॥

दृप्यदिति ! 'दृप्यताम्, पराक्रममाणानां, नतु निर्व्यापृतितयाति-ष्ठताम् । , द्वेषणानां, परिपन्थिनामेव, दन्तिनां, नतुकेवलगजानां, 'दा-रणे, पाटने, 'हरेः, सिंहस्य । अश्लिष्टशब्दनिबन्धनं केवल परम्परितरूप कमलंकारः । 'रज्यतः, रागयुक्तस्य, 'धातुसम्बन्धेप्रत्ययाः' इत्यनेन प्रधानक्रियाकालएव गौणक्रिया बोधक धातूत्तरं प्रत्ययस्यविधानात् प्रोद्भा सितेत्यत्रप्रधानीभूत प्रोद्भासनक्रियाया अतीतकालिकत्वेनरज्यत इत्यत्रापि लटोऽतीतकालार्थकत्वात् । 'प्रतापानलस्य, प्रतापात्मकस्याग्नेः, परिणा-मालंकारः अग्नौ प्रतापारोपमन्तरेण तज्जातत्वस्य कीर्तिचन्द्रेऽसम्भवात् । ज्वालायाजातेन 'अवदातेन, शुभ्रेण, 'कीर्तिहिमगुना, यशश्चन्द्रेण, रूपकालंकारः । हिमगुपदोपादानात्कीर्तौस्पृहणीयतमत्वं वस्तु शब्दशक्त्या

व्यज्यते प्रोद्भासितायाः 'ज्यायाः, पृथिव्याः, पत्युः विषमालंकारोद्वितीयः, कार्यकारणयोर्वैरूप्यात् नतु अकारणात्कार्यजननरूपाचतुर्थी विभावना, प्रतापकीर्त्योः कार्यकारणभावस्यसद्भावात् । वस्तुतस्तु प्रतापत्वेन कीर्तित्वेन तस्याक्षतत्वेऽपि प्रतापाग्नित्वेन कीर्तिचन्द्रत्वेनाभावात्सम्भवत्येव साविभावनेति विभावनीय मलंकारवैज्ञानिकैः । तथाचोक्तेन परम्परितरूपकेणेतरेषामलंकाराणां संसृष्टिः । द्वितीयरूपकेण परिणामे नच विषमविभावनयो रङ्गाङ्गिभाव संकरः 'मिथिलाभूपस्य, रुद्रसिंहस्याऽऽत्मजस्य वनमालिसिंहस्य, 'साचिव्यपदं' मन्त्रित्वस्य स्थानम्, नतु अन्यस्य, 'प्रसाध्य, अलंकृत्य, नतु प्राप्य । नवातेना लंकृतः अमुनैवतत्स्थानस्य शोभायाउदयात्, नत्वदसीयशोभायास्तेन । यः गोसाञिमिश्रः, कं प्राणिनम्, अतुलं यथास्यात् तथा नोपचकार, अपितु सर्वमेव, तेनैतत्कर्तृक उपकारस्स्वात्मक इवेत्यनन्वयालंकारध्वनिरितिध्येयम् । अतएव 'अनुदिवसं' प्रत्यहं केन प्राणिना न सम्यक् स्मर्यते, अपि तु सर्वैः, तदनन्तरं तदधिकगुणशालिन स्तत्सदृशस्यचोपकर्तुस्सचिवस्य विरहात् । अतुलोपकारकर्तृत्वस्य स्मरणगोचरतायां हेतुतया काव्यलिंगम्, एतच्च संसृज्यते निरुक्तैरलंकारैरिति ॥ १९ ॥

योदीर्घां समखानयद्द्रुतमामग्राभिधां दीर्घिकां
शेतून् प्रोदसृजच्चदुश्चरपदेषूच्चावचान्युच्चकैः ।
आगादागमयांचकारचजनान् सत्तीर्थसार्थानमुद्ग
भोगान्नैकविधोचितानन्वभूवायुः परंलब्धवान् ॥१६॥

यइति । 'परमायुः, द्विसप्ततिसम्वत्सरावच्छेद्यभोगजनकमदृष्टम्, लब्धवान्यः गोसाञिमिश्रः । एतेन वक्ष्यमाणानेक कार्यसंविधानस्याधिक

समयसम्बन्धदर्शनेन सामर्थ्यं द्योत्यते, तेनचपरिकरालंकारः । दीर्घां वहुतमाम् 'अग्रा, प्रथमा, 'अभिधा, अभिधानं, यस्यास्ताम् एवञ्च सतीर्थं सुरसशिशिरसुरभिविमलजलवत्त्वं दीर्घिकायांव्यज्यते । 'दीर्घिकाम्' महा-पुष्करिणीम् , सम्यक् अखानयत् । 'दुश्चरपदेषु, दुर्गमस्थानेषु, 'उच्चाव-चानि, वहुविधान, "उच्चावचं नैकभेदम्,, इत्यमरः, मयूरव्यंसकादित्वात् समासः 'उच्चकैः, उन्नतान, शेतून 'च, अपि, प्रोदसृजत् । 'सत्तीर्थस्य, वाराणसीप्रमुखस्य 'सार्थान, समुदायान, मुहुःस्वयम्, आगात्, जनान् आगमयां, चकारच । 'चः' समुच्चये । 'नैकविधान, वहुविधान् नशब्देन समासः । 'उचितान्, धर्माविरोधिनः, भोगान अनुवभूव । दीपका लंकारः "सैवक्रियासुवह्वीषु कारकस्येतिदीपकम ,' इतिप्रकाशोक्तेः । तथाच परिकर दीपकयो स्संसृष्टिरिति ॥ १६ ॥

वदान्यतान्यशरणं शरणंयश्शरीरिणाम् ।
निकेतनं विवेकादेर्मिथिलावनिकेतनम् ॥ १७ ॥

वदान्यतेति । 'यः, उक्तमिश्रः, 'वदान्यतायाः, वहुप्रदत्वस्य, 'अन्यत, लौकिकादितरत्, 'शरणम्, गृहम्, अतिशयोक्तिरलङ्कारः, लौ-किकेऽलौकिकत्व वर्णनात् । "प्रस्तुतस्ययदन्यत्वम्" इत्यतिशयोक्तिप्रकर-णेप्रकाशाभिधानात् । वदान्यतातिशयोवस्तु कविप्रौढोक्ति सिद्धेनालङ्कारेण व्यज्यते । 'शरीरिणां, नपुनस्तद्विशेषाणामेव, 'शरणं, रक्षिता । 'शरणं-वधरक्षित्रोः शरणंरक्षणेगृहे' इति विश्वः । सर्वभूतेषुदयालुता द्योत्यते । 'विवेकादेः, विवेकक्षमाशान्ति प्रभृतेर्गुणस्य 'निकेतनं, गृहम् । उक्तगुणा-तिशयोगम्यः, मिथिलाया 'अवनेः, पृथिव्याः, 'केतनम्' पताका । मि-थिलावनिशोभाकारित्वं प्रतीयते । 'केतनंतु निमन्त्रणगृहे केतौचकृत्ये"

इतिमेदिनी । यमकालङ्कारः ॥ १७ ॥

कालव्याजवसद्वियोगिविशशघेन्दुद्विषि श्रेयस
स्तिथ्यांज्येष्ठदलेसधन्यसहजज्येष्ठोऽदलस्थोऽसताम् ।
गङ्गाभङ्ग समुद्गतामृतपृषत्सङ्गातिपूताङ्गको
भास्वन्न्यस्तदृगोमितिव्यवहरन्नागादनङ्गारिताम् ॥ १८ ॥

कालेति । कालस्य, श्यामलस्यअङ्कस्य 'व्याजेन, छलेन' 'कालश्यामलमेचकाः" इत्यमरः । वसत् वियोगिनांजनानां 'विशरेण' घातेन, अघं यत्र "आलम्भपिञ्जविशरघातोन्माथवधा अपि" इत्यमरः । तथाभूतस्येन्दोः द्विषि' 'ज्येष्ठस्य' तदभिधेयमासस्य, 'दले पक्षे' धवलदलइति यावत्' चन्द्रमण्डलंविलोक्य मोद्दामकामतया केचन वियुक्ताम्रियन्ते' इति तज्जनितं पापंचन्द्रमसि कलङ्कात्मनावसतीत्यर्थः। तथाचनायंचन्द्रे कलङ्कः, अपितु वियोगिवधजनितं कल्मष मित्यपह्नुति पूर्वकारोपात्मिकाऽपह्नुतिरलङ्कारः। अघस्यचश्मामलत्वं कविसमयसिद्धम्"मालिन्यंव्योम्निपापे यशसि धवलतावर्ण्यते हासकीर्त्योः" इत्याद्यभिधानात् । "प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः' इत्यपह्नुतिलक्षणंदर्पणे ॥ 'श्रेयसः, पुण्यस्य, तिथ्याम् एकादश्यामितियावत् । 'धन्यानां, पुण्यशालिनाम 'सहजानां, सोदराणाम्, 'ज्येष्ठः ज्यायान् । तेनातितमां पुण्यशालित्वंव्यञ्ज्यम् । असताम्, पापिनाम्, 'अदलस्थः' नपक्षस्थः, गङ्गायाभङ्गात्' तरङ्गात् 'भङ्गस्तरङ्गऊर्मिर्वा" इत्यमरः समुद्गतस्य 'अमृतपृषदः, जलबिन्दोः, सङ्गेन अतिपूतमङ्गंयस्यसः, 'भास्वति, प्रोदितेसूर्ये न्यस्ताद्दक् येनतादृशः ओम् इति ब्रह्मवाचकंपदंप्रणवाभिधानं व्यवहरन्, उच्चारयन् अनङ्गारितां शिवत्वम् आगात्

प्राप्तं तथाचतादृशाङ्कुकत्व भास्वन्न्यस्तदक्त्व प्रणवोच्चारयितृत्वा नामनङ्गारितामाप्तौ हेतुतया काव्यलिङ्गमलङ्कारः । सहजेषुज्येष्ठतयाज्येष्ठमासे असद्-पक्षीयतया वियोगिघातकतयाऽसतः विधोः पक्षं धवलदलंविहाय कृष्णपक्षे पुण्यशालितया पुण्यतिथौ गंगातीरेप्रणवंव्याहरन् शिवसायुज्यतामासाद-यत् कळेवर मत्यजदित्यभिप्रायः । एवञ्चपरिकराळङ्कारोऽपि । तथाचा-पह्नुतिकाव्यलिङ्गपरिकराणां संसृष्टिरिति विमर्शनीयम् ॥ १८ ॥

यस्यास्ते धर्मजायासमिति विजयिसत्कोविदेशान्ववाया
नक्तादिक्लान्तकाया हरिपदजलजध्याननिर्धूतमाया ।
शान्तापाया नयन्ती समयमवहिता तारकञ्चिन्नयाना
यातो हिंसैककर्मा परममुनिपदं येन वल्मीकजन्मा ॥१८॥

निजमातरं वर्णयति, यस्येत्यादिना । 'यस्य, गोमाञ्जिमिश्रस्य, 'धर्मजाया, धर्मार्था 'जाया, पत्नी, शाकपार्थिवादित्वात् समासः । "चतुर्थीतदर्थार्थवलिहितसुखरक्षितैः" इति सूत्रेण धर्मायजायेतितादर्थ्येसमास इत्यपिबहवः । 'समितिषु, सभासु, विजयिनः नकेवलंजयिनः । 'सन्तः, मान्याः साधवश्च, 'कोविदानां, विदुषाम्, ईशा यत्र, सचासौ 'अन्ववायो, वंशोयस्या स्तथोक्ता । समितिविजयिताया मान्यत्वेकोविदेशत्वेच हेतुभावात्काव्यलिङ्गालङ्कारः । "सन्सुधीः कोविदोबुधः" इत्यभि-धानेन सत्कोविदपदयोः बुधरूपैकार्थकत्वस्य तात्पर्यानवधारणदशायां प्र-तिभासनात्पुनरुक्त वदाभासोऽपितथा । सचायं प्रकृते शब्दार्थोभय(१) स्य विजयः सत्पदस्य परिवृत्तेरसहत्वात् कोविदपदस्य परिवृत्ते स्तदभा-वाच्च । वंशेतादृशकोविदेशसम्बन्धित्वेन महत्त्वं व्यज्यते, तथाच तादृशे-

(१) तथाहि पुनरुक्तवदाभासो द्विविधः, शब्दगतः [illegible] तत्राद्योऽ-पि द्विविधः, सभङ्गशब्दगतः अभङ्गशब्दगतश्चेति ॥

वंशोवर्णनीयायामातुरङ्ग मित्युदात्तोप्यलंकारः "महतां यदुपलक्षणमङ्ग-भावः अर्थाद्वर्णनीये तदप्युदात्तम्" इति काव्यप्रदीपाभिधानात् ; 'नक्ता दिभिः, नक्तोपोषणादिभिः, नत्वन्यथा, क्रान्तः कायोयस्या स्तथा भूता। एवञ्च क्रान्तत्वेऽन्यप्रयोज्यत्वस्यव्यावृत्तेस्तात्पर्य विषयीभूताया आर्थत्वादार्थीशुद्धा परिसंख्यालङ्कारः। अयञ्च पुरोदितेष्वपि पद्येषु यथायथं बोध्यः। एवमग्रेऽपि। हरिपदमेवजलजं, तेन रूपकालंकारः, तस्य 'ध्यानेन, समानविषयकान्तः करणवृत्ति प्रवाहेण, "तत्र प्रत्ययैक तानताध्यानम्" इति हि पारमर्षं पातञ्जलदर्शनेसूत्रम् 'निर्धूता, नितरां तिरस्कृता माया यया, प्रयोज्यत्वं तृतीयार्थः तेनध्यानस्यसाक्षादविद्याना शकत्वविरहेऽपिनक्षतिः। यद्वा साक्षात्कारद्वारातस्यापि हेतुत्वमेवेति तृती यायाएतदर्थकत्वेऽपिनक्वापि हानिः व्यापारेण व्यापारिणोऽन्यथासिद्धिवि-रहादिति विभावनीयम्। अतएव शान्तः 'अपायः, अविद्याकल्पितोऽ-न्तरायः यस्या स्तादृशी अविद्यानाशेनैवतस्यापि नाशात्, इहाऽपिकाव्य लिंगम्। 'अवहिता, अप्रमत्ता सावधानेति यावत्, 'तारकं, रामेतिनाम, 'चिन्तयाना, मनसाजपन्ती वाचिकोपांशु मानसजपेषु अन्त्यस्यैवेतरा पेक्षयाप्राधान्यात्। समयं नयन्ती, नत्वन्यथा, आस्ते, केतुन आसिता। एतैश्च विशेषणैर्माहात्म्यं मातरिव्यज्यते। येन तारण इसैव 'एकं, प्रधानं कर्मयस्य तादृशः वल्मीकजन्मा परममुनिपदं यातः॥ इहालंकाराणां संसृष्टिसंकरव्यवस्था स्वयमेव सूक्ष्मधिया कार्येति। स्रग्धरावृत्तम "म्र-भ्नैर्यानांत्रयेण त्रिमुनियतियुता स्रग्धराकीर्तितेयम्" इति वृत्तरत्नाकरी-यलक्षणसमन्वयादिति ॥ १८ ॥

तस्मात्तौ व्रमतिः पतिव्रतलसद्धामामणौ जानकी



देव्या मत्र सतांप्रियः समजनि श्रीबालकृष्णाभिधः।

यः प्रेम्णा चरणाम्बुजन्मयुगलं शुश्रूषमाणोगुरो
विंशाब्दावधि दर्शनेषु परमां शिक्षां समासादयत् ॥१९॥

तस्मादिति । पत्युः व्रतेन मनुनिर्देशितेन, लसन्तीनां, योषितां, "नारीरूपं पतिव्रतम्" इति नीतेः पातिव्रत्यस्य तासां शोभावहत्वात् । 'मणौ, श्रेष्ठायाम् । ' अत्र , यथोक्तायां, जानकीदेव्यां, 'तस्मात् , गोसान्निमिश्रात्, तीव्रमतिः एतेन विंशाब्दावधि दर्शनेषु परमशिक्षासमासादनयोग्यत्वं गम्यते, तथाच परिकरालंकारः । 'सतां , साधूनां विदुषांच प्रियः । एतेनच कार्यभूतेन विनयादिगुणगणातिशयोऽव्यज्यते । सत्प्रियत्वे तीव्रमतित्व यापि हेतुतया काव्यलिंगमलंकारः । श्रीबालकृष्णाभिधः समजनि । नच श्रीशब्दस्य नामानन्तर्गततया "श्रीबालकृष्णाभिध" इत्युक्तिरसङ्गतेतिदेश्यम् , तस्याः श्रियायुक्तः बालकृष्णाभिधः श्रीबालकृष्णाभिध इति विग्रह प्रतिपाद्यार्थकत्वात् । एवमेतर्हि "संक्षेपतः श्रीरघुनाथनामा" इति प्रामाण्यवादप्रत्यक्षमणिदीधिति ग्रन्थे शिरोमणेरभिधानं तदीयविवृतौ सङ्गमयांचक्रिरेभट्टाचार्य चरणाः । यः बालकृष्णाभिधः । गुरोश्चरणएवाम्बुजन्म, तथा च रूपकालङ्कारः तस्य युगलं 'प्रेम्णा , भक्त्या, तस्यगुरुगोचरत्वात । नतु कार्यानुरोधेन । 'शुश्रूषमाणः, सेवमानः । विंशतेः पूरणः विंशः, सचासावब्दः, अवधिः यस्य तत । तदवधित्वञ्च तत्पर्यन्ताभिव्याप्तिकत्वम् । नत्ववधिपदं मर्यादार्थकम् तथासति ऊनविंश वर्षाभिव्याप्तस्यैव शिक्षाग्रहणस्य बोधः प्रसज्येत । नचविवक्षिताविवक्षितार्थोभयोपस्थापनानुकूलस्वरूपसन्देह विषयत्वात्प्रकृतस्य सन्दिग्धत्वदोषस्य प्रसङ्गः, तादृशस्य संदेहस्य प्रकृतेऽनवतारात् । 'दर्शनेषु , आन्विक्षिकीप्रभृतिशास्त्रेषु, परमां नतु साधारणीं शिक्षां समासाद-

यत् । नतु केवल मवापत्त । नचापादानानुक्त्यान्यूनत्वं दोषः, गुरावपादानत्वस्यार्थतायाअनुभवसिद्धत्वात् । यद्वा "यः प्रेम्णा गुरुपादपद्मयुगलं शुश्रूषमाणस्ततः" इति पठनीयम् पञ्चमीचेयम् "आख्यातोपयोगे" इतिसूत्रानुशिष्टा, अतएव समासाद् यदित्यस्याप्युपपत्तिः । एतेन च "प्रथमेनार्जिताविद्या" इति निन्दाश्रुतेरगोचरोऽय मित्यलम् ॥१९॥

यत्रप्रात्यहिकाध्वरौघहुतभुग्धूमान्धकारावृते
र्भास्वत्प्रौढमरीचिभिर्नहिशुचौतापं भजन्तेजनाः ।
अर्चान्यस्तविशस्त धूपपवन व्यासञ्जना मोदना
त्सान्द्रेचैकुरसञ्चयेसुरभयेनोवा यतन्तेऽङ्गनाः ॥ २० ॥

अथ निजवासग्रामं श्लोकद्वयेनवर्णयति, यत्रेत्यादिना । यत्र ग्रामे शुचौ ग्रीष्मसमये 'प्रात्यहिकस्य, अनुदिनं विधीयमानस्य. 'अध्वरौघस्य, यज्ञसमुदायस्य, 'हुतभुजां, हुताशनानां, धूमैः अन्धकारेण आवृते रावरणाद्धेतोः, 'भास्वतः, भास्करस्य, 'प्रौढाभिः, प्रवृद्धाभिः, 'मरीचिभिः, किरणैः, तापं जनानभजन्ते । अतिशयोक्त्यलङ्कारः । प्रत्यहमध्वरातिशयविधानेन परमपवित्रत्वं प्रतीयते । एवम् 'अर्चासु, देवातिथीनामर्हणेषु, न्यस्तानां 'विशस्तानां, प्रशस्तानां, धूपानां पवनै 'र्व्यासञ्जनेन, व्यासक्ततया आमोदनात्' सौरभात् हेतोः, 'सान्द्रे' स्निग्धे, चैकुरसञ्चये, केशकलापे, सुरभये, सौरभाय, अङ्गना नोवा यतन्ते सिद्धत्वादित्यर्थः । देवादीनामर्चातिशयोव्यंग्यः । स्नानात्परं सलिलार्द्रानेवचिकुरानङ्गनाधूपैर्वासयन्तीत्याचार इति ॥ २० ॥

प्रयत वंश वतंस विशारद
द्विजकुले बहुलेव महाकुले ।

वसतियोऽवसथेऽत्र समेऽसमे
श्रितशमेनवटोलपदास्पदे ॥ २१ ॥

प्रयतेति । ' प्रयतानां , पवित्राणां, तत्वतादृशानां, वंशानां ' वतंसः , भूषणं, नतुकुठाररूपं, यद्वा प्रयतेति द्विजकुलविशेषणम् । विशिष्टा ' शारदा , सरस्वती, विद्येतियावत्, यस्यतत् । द्विजानां ' कुलं, समूहो, यत्र तथोक्ते, बहुभिः ' लेखगृहैः, देवगृहैः चित्रगृहैश्च, " लेखाअदिति नन्दनाः " इत्यमरः । ' आकुले , व्याप्ते । ' समे , सशोभे ससम्पत्तिकेच, ' असमे , अनुपमे, विरोधालङ्कारः, समत्वासमत्वयोस्सहानवस्थायित्वलक्षण विरोधस्यापाततः प्रतिभासनात्, परमार्थस्तूक्तएव । श्रितः शमोयं तादृशे, शमोप्येतदीयगुणातिशयं विलोक्यैन माश्रय दितिभावः । शमस्तु अन्तरिन्द्रिय परिग्रहः । एवञ्च ग्रामे मुमुक्षाधिकारि जनशालित्वं गम्यते तस्यामेव शमस्य विनियोगात् तदुक्तं विवरणाचार्यैः " सर्वत्र फल श्रुतयः कामनोत्पादन द्वारा मुमुक्षो रधिकार प्रदर्शनार्था " इति । नवटोल पदस्य ' आस्पदे , स्थाने, नवटोलाभिधान इति यावत् 'अत्र, यथोक्ते पूर्वोक्त पद्य वर्णित इति यावत् । अवसथे, ग्रामे, "अवसथोग्राम" इति शब्दरत्नावली । यः बालकृष्णः वसतीत्यर्थः ॥ सुन्दरीवृत्तं तदुक्तं वाणीभूषणे "कुसुमगन्ध रसै रतिभूषिता, चरण सङ्गतनूपुर मण्डिता । कर सुवर्णलसद्वलयान्विता, स्फुरतिकस्यनचेतसि सुन्दरी" इति ॥ २१ ॥

कार्णाटा वनिपेन केरलमही पालेन यो गौर्जर--
ज्यानाथेनच मालवक्षितिभुजा वैदेहभूमीभृता ।
दोषज्ञाति विदूर दर्शि विदुषां राजत्समज्ञाजुषां
विज्ञानं समभानि संसदि समालोक्यासकृन्नकथा ॥२२॥

कार्णाटेति । 'यः, बालकृष्णः । कार्णाटावनिपादिना नतुयेनकेनचित् राज्ञा 'राजत्समज्ञाजुषां, विलसत्कीर्तिमतां, दोषज्ञाना-मतिविदूरदर्शिनां विदुषाम्, नतु साधारणानाम् । 'संसदि, सभायाम् । 'असकृत्, नत्वेक वारम् । 'नैकधा, बहुभिः प्रकारैः, 'समालोच्य, विपश्चिदय मितिविनिश्चित्य, नत्वापाततः । 'विज्ञातं, ख्यातं, यथास्यात् तथा । 'सममानि, सम्मानितः . यद्वा 'नैकधा, पारितोषिकरूपाणां प्रभूतमुद्राणाम् ऊर्णतन्तु निर्मित शीतनिवारकावरणानां दोशालेति भाषया विश्रुतानां समर्पणेन सममानीति । तथाच तादृश संसदि निरुक्तैर्महाराजै स्तथाविधेन सम्मानेन पाण्डित्यातिशयो व्यज्यते ॥ २२ ॥

द्वाविंशेयतिवत्सरे समधराधीशावली मस्तक-
न्यस्तस्रङ्मकरन्द विन्दु विलसत्पादारविन्दस्य यः ।
यातश्रीलरमेश्वरस्य मिथिलानेतुस्स्वविद्यौक(१)सा
माद्येऽध्यापकता मदभ्रशरदोऽनैषीत्तमावर्धयन् ॥२३॥

द्वाविंशइति । 'यः' बालकृष्णः । द्वाविंशे वत्सरे 'यति' गच्छति, समेषां धराधीशानां या आवली, तस्याः मस्तकेषुन्यस्ता याःस्रजो, मालाया, मकरन्दविन्दुना विलसत्पादारविन्दं यस्य, तथोक्तस्य, निखिलभूप प्रणम्यमानस्येतियावत् । मिथिलाया नेतुः, नायकस्य, श्रील रमेश्वरस्य नतु सामान्यभूपस्य, 'स्वविद्यौकसां' स्वकीय विद्यालयानाम् 'आद्ये' प्रथमे मुख्ये, अध्यापकतां यातः 'तं' यथोक्तं रमेश्वरम् आवर्धयन् उत्तरोत्तर मौन्नत्यं प्रापयन् 'अदभ्रशरदः, बहूनिवर्षाणि "अदभ्रं बहुलंबहु" इत्यमरः । अनैषीत् इति ॥ २३ ॥

(१) स्वविद्यालये मुख्ये इत्यपिपाठः ।

श्री पद्मारमण प्रधानदिविषत्सद्मानि निर्मापिता
निश्छद्मानुरते दिशासु नयनालानानि यः प्राणिनाम् ।
चन्द्रद्वैत निरूप्य विभ्रमधियो नेताजनान् द्योतिता
शावक्रस्फुट साधुकैर विकया कीर्त्याऽभितो भ्राजते २४

अथ मिथिलापतिं रमेश्वरसिंहं वर्णयति श्रीत्यादि श्लोकषट्केन । 'यः, रमेश्वरसिंहो भूपः, श्रीपद्मारमणः प्रधानं येषां, तेषां 'दिविषदां' स्वर्गौकसां, सद्मानि, प्राणिनां, नतुमानवानामेव, नयनयोरालानानि बन्धनानि, तेन मद्मसु सौन्दर्यातिशयो व्यज्यते । 'निश्छद्मानुरतेः, निर्व्याज भक्तेः, दिशासु, नतु एकस्यां दिशि । निर्मापिता, "नलोकाव्यय निष्ठाखलर्थ तृनाम" इत्यनेन षष्ठ्या निषेधः । दिविषत्पदोपादानेन सद्म सुप्राशस्त्यं प्रतीयते । द्योतितम् 'आशायाः दिशः, वक्रूंयया, तथोक्तया, स्फुटं, विकशितं "व्याकोशविकचस्फुटाः" इत्यमरः । साधुरेव कैरवंयया तादृश्या, स्फुटत्वस्याचेतनधर्मस्य साधौविरहेण कैरवतादात्म्यारोपस्यात्र-रूपक तया परिणामालङ्कारः । साधुहर्षावहाकीर्ति रेतदीयेतिभावः । कीर्त्या, चन्द्रद्वैतेन ' निरूप्याः, विषयिण्यः, विभ्रमधियः चन्द्रद्वैतगोचराणि भ्रमात्मक ज्ञानानीतिथावत । ज्ञानस्य विषयनिरूप्यत्वात् । तथाच चन्द्रेऽपि द्योतिताशावक्रत्वं, स्फुटम् अतएव 'साधु, शोभनं, कैरवं यस्मात् तत्त्वस्वरूपं स्फुटसाधुकैरवत्वंचास्ति, इति साजात्यात् कीर्तौचन्द्रत्वभ्रमेण गगन तलवर्तिनाचन्द्रेण द्वैत भ्रमो जायते जनाना मितिभावः एवंभूतः अभितो 'भ्राजते' दीप्यते । प्रेयोऽलङ्कारोपि, पद्मापतिप्रमुखदेवादिविषयिण्या विभावाऽनुभावाभ्यामभिव्यज्यमानाया वर्णनीयराजनिष्ठाया रतेर्भावस्य प्राधान्येनध्वन्यमान राजाकम्बन कविनिष्ठ रत्यात्ममावस्याङ्गभावादिति ॥ २४॥

वसुस्थितोऽपि द्विजराट् व्रजनेयश्शिवावहः ।
शिवाश्रितोऽपि सुमनो मार्गणो रतिवर्धनः ॥ २५ ॥

यः 'द्विजराट्, चन्द्रः "सोमोहवै द्विजानांराजा" इति श्रुतेः, 'वसौ, अष्टमस्थाने, स्थितोऽपि 'व्रजने, यात्रायां 'शिवावहः, कल्याणकारकः, यात्रायां चन्द्रस्याष्टमस्थानस्थितत्वे मरणप्रद त्वं ज्योतिस्तन्त्र सिद्धम् एवञ्च विरोधः । वसुपदे विभवार्थकत्वस्य द्विजराजपदे ब्राह्मण पत्यर्थकत्वस्यचाभ्युपगमेन तत्परीहारः । आगत जनकल्याणकारक इति पर्यवसितार्थः । 'शिवं' शङ्करम् आश्रितोऽपियः 'सुमनः, प्रसूनं मार्गणो वाणोयस्य सः, काम इति यावत्, रतेः तत्प्रियायाः 'वर्धनः, 'आनन्दनः, शिवकामयोरर्थि प्रत्यर्थि भावाद्विरोधः । 'सुमनाः, शोभनमना, मार्गणो, याचको, यस्येति, 'रतेः' सुखस्यवर्धन इत्यर्थस्याभिमतत्वेन तत्पूत्यादेशः । "मार्गणो याचकेशरे" इति मेदिनी . श्लेषभित्तिको विरोधाभासालङ्कारः तेनतयोस्संकर इति ॥ २५ ॥

प्रजानां मानसे प्रेम्णो वीजाज्जाता दयाऽमृतैः ।
प्रौढा ऽऽशंसालता कापि श्रेयो यस्य प्रसूयते ॥२६॥

प्रजाना मिति । प्रजानां मानसे यस्य प्रेम्णो वीजात्, विषयत्वं षष्ठ्यर्थः । जाता यस्य दयामृतैः प्रौढा समवेतत्वं षष्ठ्यर्थः । 'कापि, लो कोत्तरा, यस्य आशंसा, समीहा, लता, विषयत्वं षष्ठ्यर्थः । यस्य 'श्रेयः' कल्याणं 'प्रसूयते, जनयति । यस्यराज्ञोऽभ्युदयं प्रजाः कामयन्त इति भावः । राजप्रजयो रन्योन्यानुरागवत्त्वं व्यज्यते । रूपकानुप्राणितो व्यतिरेक लङ्कार इत्यनयो स्सङ्कर इति ॥ २६ ॥

विवेकराकापतिकल्पितोदयः
सुधीवर व्रात निषे वितोऽजयः

अशेषरत्नानवगाहनाशयः
पयोधिवद्भूमिपति र्विभातियः ॥ २७ ॥

विवेकेति । यः भूमीपतिः, विवेकएव प्रकाशमानत्वादाह्लादकत्वाच्च राकापतिः, पूर्णचन्द्रः, तेन, नत्वन्यथा 'कल्पितः, जनितः, 'उदयो, वृद्धि र्यस्य सः, एतेनोदये चिरंस्थेमानं द्योत्यते। सुधीवराणां, विद्वद्वराणां 'व्रातेन' समुदयेन 'निषेवितः' सेवितः। तेन तेषां गुणग्राहित्वं राज्ञिव्यज्यते । 'अजयः' नजयो यस्य, सः । जयनकर्मत्वाभाववानितियावत् पराक्रमातिशयोगम्यः । 'अशेषाणि, समग्राणि, अनपायानिच रत्नानियत्र, यद्वा अशेषाणां 'रत्नं, श्रेष्ठः । तथोक्तस्सन् 'अनवगाहनः, ज्ञानाविषयः, आशयः, अभिप्रायोयस्य तादृशः नीतिमार्गगामित्वं गम्यम् । अतएव 'पयोधिवत्, समुद्रेणतुल्यः, विभाति । सोऽपि विवेकतुल्येन राकापतिना कल्पितोदयः, 'सु, अतिशयेन धीवराणां, कैवर्तानां "कैवर्तेदाशधीवरौ" इत्यमरः । व्रातेन मत्स्यादिलाभाय निषेवितः, अजयः, अशेषरत्नः, 'अनवगाहनः, स्प्रष्टुमशक्यः, 'आशयः, तलं यस्य तादृशश्चेति रूपकश्लेषोपजीवितो पमालङ्कारः । तथाचतेषां सङ्कर इति ॥ वंशस्थवृत्तम् "वदन्ति वंशस्थविलं जतौजरौ" इति लक्षणान्वयादिति ॥ २७ ॥

यस्मिन् मैथिलशासके फणिपते र्भाष्येऽपवादक्रमो
न्याये सच्छलताऽथजै मिनिनये देवाकृति र्द्वेषिता ॥
साङ्ख्येच प्रकृतेः प्रधानतरता, योगेऽन्तरायश्श्रुतिः
वेदान्तेऽधिकभाषितेनबहुधा सज्जातिबाधस्थितिः ॥२८॥

यस्मिन्निति। मैथिलानां शासके यस्मिन् भूपेसति 'यस्यच भावेन भाव लक्षणम्' इत्यनेन सप्तमी । फणिपते श्शेषनागस्य भाष्ये व्याकरणस्य महा

भाष्ये अपवादस्य क्रमः तथाहि "वृद्धिरेचीत्यस्य अदेङ्गुण इत्यत्र, एत्ये धत्यूठ्सु इत्यस्य पररूपगुणयोः, व्याङ्परिभ्यो रम इत्यस्य स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यत्रा पवादकत्वं द्रष्टव्यम् । न्याये गौतमीयदर्शने सच्छलता छलम् तत्र प्रमाण प्रमेय संशय प्रयोजन दृष्टान्तसिद्धान्ता वय वतर्क निर्णयवादजल्प वितण्डा हेत्वाभासच्छलजाति निग्रहस्थानानि षोड़शपदार्थाः कैवल्योपयोगिनो महर्षिणा प्रतिपादिताः । अथ 'जैमिनिनये, मीमांसायां देवाकृतेर्द्वेषिता, तत्र प्रत्याख्यातं किलदेवानां शरीरम्,'अन्यथा युगपद्विधीयमानेषु क्रतुषुदेवस्य प्रामाणिकं सन्निधानं नोपपद्येत इति मन्त्रात्मिकैवदेवतेति । नतुलोकेषु 'अपवादस्य, कलङ्कस्य क्रमः, निषिद्ध क्रियानाचरणात् अतएव नवा 'सच्छलता, व्याजयुक्तता । नवा देवस्याकृतेः मूर्तेः द्वेषिता देवमूर्तयो न भज्यन्त इतिभावः माङ्गल्येच माङ्गल्य दर्शनएव चोऽवधारणे । पुनरर्थकोवा । 'प्रकृतेः, मूलप्रकृतेः अविकृतिप्रकृतेः तत्त्वञ्च तत्त्वान्तरारम्भकत्वेसति तत्त्वान्तरानारभ्यत्वम् । 'प्रधानतरता' सर्वोपादानता, "प्रकृतेर्महान् महतोऽहङ्कारः अहङ्कारात्पञ्चतन्मात्राणीत्यादि कापिलदर्शने सूत्रम् । तत्त्वान्तरानारभ्यत्वञ्च "मूलेमूलाभावादमूलं मूलम्" इति तत्रत्यसूत्रस्य भाष्ये विज्ञानभिक्षुणा समर्थितम् । नतु सचिवेषु प्रकृतिपदाभिधेयेषु प्रधानतरता,प्राधान्यमात्रस्यैव सत्त्वात् तच्च राजन्येव, निन्दितं हि राज्यं सचिवेनायत्तम् 'योगे, योगदर्शने, अन्तरायस्य 'श्रुतिः, श्रवणम् सच एकतत्त्वाभ्यासोपयोगदर्शनाय समाधिपादे "व्याधिस्त्यानसंशय प्रमादालस्या विरति भ्रान्तिदर्शनानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः, "दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः" इति सूत्राभ्यां प्रतिपादितः ॥ नतुलोकेषु 'अन्तरायस्य, विघ्नस्य श्रुतिः सर्वेनिर्विघ्नास्ति-

ष्ठन्ति । वेदान्तेऽधिकभाषितेन 'बहुधा, अनेकाभिर्युक्तिभिः 'सज्जातेः, सत्तात्मिकायाजातेः 'बाधस्य, खण्डनस्य, स्थितिः तथाहि द्रव्यंसत् गुणस्सन् कर्मसत् इति प्रतीत्युपपादकतया सत्तासामान्यं साधयन्ति वैशेषिकाः। तदसत् जात्यादावपिसत्त्व प्रतीतेः, द्रव्यादिगतयैवसत्तयाजात्यादौ तस्याउपपादनेविनिगमनाविरहः । यच्च प्रागभ.वावृत्ति प्रतियोगिता सम्बन्धेन ध्वंसंप्रति तादात्म्येन सतः कारणत्वमितिकारणतावच्छेदकतया सत्त्वस्यसाधनं, तदपिनशोभनम् अन्योन्यसंश्रयापत्तेः कार्यकारणभावे निरुक्ते सिद्धएवहिसत्त्वस्यसिद्धिः सिद्धेचसत्त्वे कार्यकारणभावस्य सिद्धिरिति अनयैवदिशाऽन्याअपिजातयो निराकार्या इत्यधिकमन्यत्रविस्तरः । नतु लोकेषु, 'सती, समीचीना जाति ब्राह्मण्यादि यस्मिन् तस्य 'बाधः, पीडनम्, नहि ब्राह्मणादयः पीड्यन्ते । आर्थी परिसङ्ख्यालङ्कारः । शासने प्रकर्षातिशयोव्यङ्ग्य इति ॥ २८ ॥

सन्तापोऽग्निगृहे, मदोगजपतौ, शैलेद्विजिह्वस्थितिः
स्तेयं वामदृशोऽञ्चलस्य सुरत क्रीडाविधौप्रेयसा ।
दम्पत्योः प्रवियोगमाश्रितवतो राजोदयोऽमर्षणो
जा·तीनां परता प्रसूनसमये भानौवृषत्यागिता ॥ २९ ॥

सन्ताप इति । यस्मिन् मैथिलशासक इति प्राक्तनश्लोकेनानुषज्यते । 'अग्निगृहे, स्थापित श्रौताग्निगृहे, महानसेवा सन्तापः, नतुवासगृहे, कारणाभावात् । गजपतौ 'मदः, दानवारि । 'शैले, पर्वते 'द्विजिह्वस्य, शर्पस्य स्थितिः । नतु लोकेषु 'मदः, गर्वः, "मदो रेतसिकस्तूर्यां गर्वे हर्षे भदानयोः" इति मेदिनी,नवा 'द्विजिह्वस्य' कुटिलस्य स्थितिः । वामदृशः अञ्चलस्य सुरतक्रीडाविधौ 'प्रेयसा, प्रियतमेन, स्तेयम्, चौर्यम् । नतु

धनस्य जनैस्तत् । 'प्रवियोगं, प्रकृष्टं विप्रलम्भम्, आश्रितवतोः दम्पत्योः जायाचपतिश्च दम्पती, जायाया दम्भावो निपात्यते । 'राज्ञः, चन्द्रस्य, उदयः 'अमर्षणः, असह्यः, नतु 'राजोदयो, नृपति वृद्धिः । 'प्रसूनसमये, वसन्तर्तौ, 'जातीनां, जाती पुष्पाणां 'परता, शत्रुता "नस्याज्जातीवसन्ते" इतिहिकविसमयः । नतु लोकेषु, जातीनां ब्राह्मणादीनां परस्परंविद्वेषो नास्तीतियावत् ! 'भानौ, सूर्ये, वृषस्य वृषराशेः, त्यागिता, सहि वृषराशि विहाय मिथुनंव्रजतीति । नतु लोकेषु 'वृषस्य, धर्मस्य त्यागितेति ॥ 'पुण्य श्रेयसी सुकृतंवृषः" इत्यमरः । आर्थी परिसङ्ख्यालङ्कारः ॥ २९ ॥

श्रीमत्पञ्चमजार्जभारतमहीनाहीनसम्विन्महा
विद्या संजवनेऽवनेनतनुते योऽवाधमध्यापनम् ।
सोऽहं मैथिलराजपट्टमहिषी निर्लक्ष्मलक्ष्मीश्वरी
देव्यास्सच्चरितं यथामतिपदे ग्रंथ्नामि रत्नंगुणैः ॥३०॥

श्रीमदिति । यः बालकृष्णाभिधः । श्रीमतः पञ्चमजार्जस्य भारत महीनस्य भारतपृथिवीपतेः, 'अहीना, अनपकृष्टा ' संवित्, ज्ञानंयस्य, निरतिशयप्रज्ञावत इति यावत् " सम्वित्प्रतिपज्ज्ञप्तिचेतना ,, इत्यमरः । महति विद्यानां 'संजवने, चतुश्शाले । " संजवनं त्विदं चतुश्शालम् " इत्यमरः । 'अवनेन' प्रीत्या " अवनं प्रीतौच रक्षणे " इति मेदिनी । 'अबाधम्, निर्वाधम् ' अध्यापनं तनुते, नतु केवलं करोति । अध्यापन फलस्य यशोलाभादेः कर्तृगामित्वा दात्मनेपदम् । तथा च एनेन पूर्वोदि- तैश्चश्लोकैः स्साक्षात्परम्परयाच कवि निष्ठ उत्कर्षोध्वन्यते । सोऽहं मैथिल राजस्य लक्ष्मीश्वरसिंहस्य पट्टमहिष्याः निर्लक्ष्मणः, निष्कलङ्कायाः तेन सतीत्वं व्यज्यते, परिकरश्चालङ्कारः सच्चरितशक्तित्वोपपादकत्वात् ।

लक्ष्मीश्वरीदेव्याः सच्चरितं रत्नं पदैर्गुणैः, यथामति ग्रथ्नामि, परिणामा लङ्कारः, । एवञ्च भावध्वनिरिति ॥ ३० ॥

नास्मिन् शासति भारतावनितलं धर्मागमो हीयते
पूर्वस्मिन्निव दुर्बले बलवता बाधानवाऽऽधीयते ॥
नो स्तेनाद्विपिनेपि नेत्रविकलस्यापि त्रसोदृश्यते
नोवा प्रोषितभर्तृका प्रियचिरक्लेशेन संयुज्यते ॥३१॥

अथ षड्भिः श्लोकैर्भारतेश्वरं वर्णयति यस्मिन्नित्यादिभिः । अस्मिन्, पञ्चमजार्जे, भारतावनितलं शासति सति 'धर्मस्य, पुण्यस्य, 'आगमः, शास्त्रम्, आचारइति वा धर्मेणसहितआगम इति वा, धर्मः शास्त्रमाचारोवेतियावत् धर्मएव फलप्रदत्वादगमोवृक्षइति वा, "पलाशीद्रुद्रुमागमाः" इत्यमरः धर्मस्य 'आगमः, प्राप्तिरिति वा । धर्मस्य 'आगमः, ज्ञानं यस्मादिति धर्मोपदेष्टेति वा । 'धर्मस्य, क्रतोः न्यायस्य अहिंसाया उपनिषदोवा आगम इति वा । 'धर्मस्य, धनुषः, आगमो धनुर्वेद इतिवा । "धर्मोऽस्त्री पुण्यआचारो स्वभावोपमयोः क्रतौ अहिंसोपनिषन्न्याये ना धनुर्यम सोमपे" इति मेदिनी । 'हीयते, अपचीयते अभङ्गश्लेषालङ्कारः, पूर्वस्मिन्निव, यवनसम्राज्यसमयइव, दुर्बलेजने बलवताजनेन 'बाधा, पीड़ा, नवा 'आधीयते, क्रियते । यवनसाम्राज्ये दुर्बलोबलवताऽबाध्यत इति ऐतिहासिकी प्रवृत्तिः । विपिनेऽपि किमुत ग्रामेनगरेवा, नेत्रविकलस्यापि, अन्धस्यापि, किमुत चक्षुष्मतः । 'स्तेनात्, चौरात् "चौरैकागारिक स्तेन दस्युतस्कर मोषकाः" इत्यमरः । 'त्रसो, भीतिः, नो दृश्यते । राजरक्षितत्वेन सर्वत्र सर्वएव निश्शङ्कं सञ्चरन्तीति भावः । अर्थापत्त्यलङ्कारोव्यङ्ग्यः । "भीत्रार्थानां भयहेतुः" इत्यनेन

पञ्चमी । प्रोषितः भर्ता यस्याः सा वियोगिनीतियावत् । प्रिय चिरक्लेशेन नीत्वा 'संयुज्यते, संबध्यते । धूमशकटादिना सपदि प्रियस्यागमनात् । प्रियस्य क्षणमप्यनवलोकनेन क्लेशस्य जायमानत्वेऽपि चिरकालिकस्सतस्यानभवतीत्यर्थः । अतएव चिरपदोपादानम् । शासने प्राशस्त्यं वाक्येन ध्वन्यते, तस्यच राजविषयकरतौ भावेऽङ्गत्वमिति एवमग्रेऽपि ॥३१॥

तौरुष्काधिपहेङ्गरीनृपसखं निर्वास्य यः केशरं
सर्वोर्वीपतिगर्वखर्वणकरः श्रीसार्वभौमोयुधि ।
तद्बध्वा नयनाम्बुजन्म विगल द्धारांझरै रायुधै
र्निश्वासोष्णसमीरणैश्च विजितः क्लेशान् सलज्जोऽन्वभूत् ॥

तौरुष्केति । सर्वेषामूर्वीपतीनां, भूपानां 'गर्वस्य, अभिमानस्य, खर्वणकरः, अवनमयिता यः श्रीभिरुपेतः सार्वभौमः सर्वासु भूमिषु स्थितः चक्रवर्तीतियावत् । गन्धद्विप इतिवत्समासः । युधि, सङ्ग्रामे, 'तौरुष्काधिपस्य, टरकीतिनामविदितदेशोद्भवलोकाधिपतेः हेङ्गरीतिनाम धेयस्य यवननृपस्य सखायं नतु एकाकिनं, तेन शौर्यातिशयो ध्वन्यते, "राजाहः सखिभ्यष्टच्" इत्यनेन टच् प्रत्ययः । 'केशरं, जर्मनाभिधान महाजनपदस्य सम्राजं, नतु साधारणं राजानं 'निर्वास्यराष्ट्रात् बहिष्कृत्य, नतुहत्वा,तस्य केशरस्य वध्वा कर्त्र्या नयनेएव अम्बुजन्मनी, रूपकालङ्कारः ताभ्यां विशेषेण गलतां 'धारां' जलानां, 'झरैः, निर्झरैः, वारुणैः, निश्वासात्मकै रुष्णसमीरणैश्च वायव्यै रायुधैः पादचतुष्टयात्मकविश्वामित्रप्रणीतधनुर्वेदप्रतिपादितचातुर्विध्यैः करणभूतैः विजितः । तथाच परिणामालङ्कारः । वारिनिर्झराणां विजयकरणत्वमुपपादयति ह्यायुध तादात्म्यारोपः । अतएव सलज्जः राज्ञोविजेतृत्वेऽपि तद्वध्वा विजितत्वात्

तथाच काव्यलिंगम् वध्वा विजितत्वस्य लज्जासाधनत्वात् । क्लेशान् अन्वभूत् । केशरे निर्वासिते तेन वियुक्तायास्तस्य वध्वास्तावान् अश्रुप्रवाहः निश्वासश्च समजायत, येनायं नितरां क्लेशमन्वभवदितिभावः । व्याजस्तुतिरलङ्कारः, रिपुवधूविजितत्वात्मनिन्दायाः स्तुतिव्यञ्जकत्वात् । रिपुविषयिणीतद्वधूनिष्ठा भीतिर्वाष्पनिश्वासानुभावचर्व्यमाणा प्राधान्येन ध्वन्यमानकविनिष्ठ राजविषयक प्रीतिपोषक राजनिष्ठवीर्यपोषकतया द्विधा रसवदलङ्कारश्चेति ॥ ३२ ॥

निशम्यमानेऽपि जयप्रयाणे स्रवन्ति गर्भारिपुकामिनीनाम्
यस्यारिदर्वीकरमानकालकूटव्युदासेऽपि नरेन्द्रभावः ॥३३॥

निशम्येति । यस्य भारतेश्वरस्य, जयार्थे प्रयाणे 'निशम्यमानेऽपि, श्रूयमाणेऽपि, किमुत विलोक्यमान इत्यर्थापत्त्यलङ्कारो व्यङ्ग्यः । रिपुकामिनीनां, नतु कामिन्याः, गर्भाः 'स्रवन्ति, पतन्ति, अत्र गर्भस्रावस्य निरुक्तप्रयाणश्रवणोत्तरकालभावित्वेन तत्समकालत्व प्रतिपादनात्कारणकार्य पौर्वापर्य, विपर्ययलक्षणोऽतिशयोक्त्यलङ्कारः तेनच श्रवणात्परमतिशैघ्र्यं गर्भस्रावे व्यज्यमानं तादृशश्रवणाःलम्बनीं गर्भस्रावानुभावां रिपुकामिनीगतत्वेन व्यञ्जयति भीतिं भयानकरसस्थायिभावात्मिकाम् व्यभिचारिभावात्मकं त्रासंवा, साचेयं सोऽयंवा प्राधान्येन ध्वन्यमानां कविगतां राजविषयकप्रीतिं परिपुष्णाति, इति निरुक्तस्य रसस्य भावस्य वा तस्या अङ्गतया रसवदलङ्कारः प्रेयोऽलङ्कारोवा । अरयएव 'दर्वीकराः, व्यालाः, तेषां मानएवकालकूटं विषविशेषः "पुंसि क्लीबेच काकोलकालकूटहलाहलाः" इत्याद्यमरः । तस्य 'व्युदासेऽपि, निराकरणेऽपि, अपिना नराणां शासनादिसमुच्चीयते । 'नरेन्द्रभावः, नरेन्द्रभावपदप्रतिपाद्यः विषवैद्यत्वं

नरेशत्वञ्च, यस्येत्यनुषज्यते, अस्तीतिशेषः "अस्तिर्भवन्तिपरः,, इत्याद्यनुशासनात् । शब्दप्रतिपाद्यत्वेनैव हि श्रानमर्थस्योपगतमालङ्कारिकैरित्यावेदितमेव, अधिकन्तु (१)पदवाक्यरत्नाकरेऽनुसन्धेयम् । परम्परितरूपकमलङ्कारः । संकरसंसृष्टिव्यवस्था सूक्ष्मदृष्ट्या कार्येति ॥ ३३ ॥

यस्य प्रोद्धतवैरिवर्गकमलोल्लासत्रपाकारके
कीर्तिश्वेतमयूखमालिनि वरे विद्योतिनामोदिते ।
निश्शेषे सितमाश्रिते प्रियतमाभ्याशं प्रयासं विना
निः क्राम्यन्त्यभिसारिकाः क्षणदया चन्द्रातपादीसया ३४

यस्येति । यस्य भारतेश्वरस्य प्रोद्धतानां वैरिवर्गाणां 'कमलाया' लक्ष्म्या, उल्लासएव 'कमलस्य, पद्मस्य, उल्लासः, उल्लसितं कमलमिति यावत् "क्तिहितोभावोद्रव्यवत्प्रकाशते":इतिन्यायात् । तस्य 'त्रपायाः, सङ्कोचस्य, कारके, अतोऽत्यन्ततिरस्कृतवाच्यतया सङ्कोचातिशयोध्वन्यते, त्रपायाश्चेतनैकधर्मत्वेन मुख्यार्थस्य बाधितत्वात् । विद्योतिनां मध्ये 'वरे, श्रेष्ठे, सकलविद्योतिनिरूपित श्रेष्ठत्ववतीतिवा, कीर्तिरेव श्वेतमयूखमाली, शुभ्रांशुः तस्मिन् नतु चन्द्रमसि, तदुदयस्य श्वैत्यानुपपादकत्वात् । 'आ, समन्ततः । उदिते सति । श्लिष्टशब्दनिबन्धनं केवलपरम्परितरूपकमलङ्कारः । प्रसिद्धचन्द्रापेक्षया व्यतिरेकश्च सर्वत्रोदितत्वेन कीर्तिचन्द्रस्याधिक्यात् । निश्शेषे विषये 'सितं, शौक्ल्यम्, आश्रिते सति । अभित उदितत्वस्य निखिले शौक्ल्यावहत्वेन वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

---

१ तच्च अस्मदाद्यदृष्टशरीरविशेषवाचक रामरावणादिपदस्थले लक्षणायानावश्यकत्वं भवति पदशानवादिनाम् किञ्च शाब्दबोधाकांक्षाज्ञानकार्यकारणभावे व्यभिचारस्याप्रसक्त्या कार्यतावच्छेदकेऽव्यवहितोत्तरत्व निवेशनमप्यनादरणीयं तेषाम् इत्यादिकम् ॥

चन्द्रातपै राद्दीप्तया 'क्षणदया, रजन्या, अपवर्गे तृतीया, तेन निर्गमने सफलत्वं व्यज्यते। प्रयासं धवलवसनभूषणपरिधाने तादृशकुसुमैः केशप्रसाधने हरिचन्दनद्रवानुलेपने अन्यादृशाम्बरपरित्यागे प्रयत्नम्, व्रजन्तिच तथैव ज्योत्स्नीष्वभिसारिकाः तदुक्तं "मल्लिका मालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः। क्षौमवत्योनलक्ष्यन्ते ज्योत्स्नायामभिसारिकाः" इति। विना, प्रियतमस्य, नतु पत्युः प्रियस्यत्रा तदन्तिकगमने साहसासम्भवात्। 'अभ्याशं, समीपम्, "समीपे निकटासन्नसन्निकृष्टसनीडवत्। सदेशाऽभ्याशसविधसमर्यादसवेशवत्" इत्यमरः। अभिसारिकाः "अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका" इति दर्पणोक्तलक्षणाः। 'निः क्राम्यन्ति, निर्गच्छन्ति। समुदितराजकीयकीर्तिशुभ्रांशुदीधितिभिर्वसनादीनां धवलद्युतिशालितालाभात्। एताश्चाभिसारिका गणिकाद्यन्याएव तासां प्रयासस्यानावश्यकत्वात्। तथाच कविप्रौढोक्तिसिद्धेनानेन वस्तुना अभिसारिकायाअप्युपकारित्वं वस्तु राजकीयकीर्तौ व्यज्यते तेनच तद्विषयिणी प्रीतिरिति ॥ ३४ ॥

लोकान्सम्मदयन् दिशोविशदयन् ज्योत्स्नां नयं शीलयन्
यः प्रत्यर्थिदलं तमोविदलयन् कामं समापूरयन्।
सन्तापं तिरयन् सुकैरवकुलान्यादीपयन् मण्डलं
मेदिन्याः प्रतिभासयन् करगतं राजश्रियं पुष्यति ॥३५॥

लोकानिति। यः भारतेशः, 'राज्ञो, नृपस्य, अथच चन्द्रस्य श्रियं 'पुष्यति, वर्धयति। एतं भारतेशमाश्रित्य राजश्रीरेधत इतिभावः। अत्र कथन्तानिवृत्तये उभयसाधारणं विशेषणमाह लोकानित्यादि। 'लोकान्' जनान्, 'सम्मदयन्' हर्षयन्, चन्द्रपक्षे प्रमुत्पादयन्निरसि। चन्द्रदर्शनेन

काममदस्य भवनात्। दिशो, ननु दिशं, 'विशदयन्' धवलयन्, प्रकृते कीर्त्या, परत्र ज्योत्स्नया, तेन कविप्रौढोक्तिसिद्धेन वस्तुनैतेन विमलकीर्तिभूयस्त्वं व्यज्यते। "विशदश्वेतपाण्डुरा" इत्यमरः। 'ज्योत्स्नां, चन्द्रिकाम्, 'नयं, नीतिम्, 'शीलयन्' कलयन्। एतच्च विशेष्यविशेषणभावप्रातिलोम्यादुभयत्रपक्षे योजनीयम्। विषयप्रकाशकत्वं द्वितयानुगतोधर्मः यमपेक्षते रूपकम्। एवमग्रेऽपि। 'प्रत्यर्थिनां, द्विषतां, दलं तमः 'विदलयन, विशेषेण निराकुर्वन्। तेनच वीररसो व्यज्यते, तस्यच प्रधानध्वनिभावाङ्गतया रसवदलङ्कारः। 'कामं, 'काम्यते, अभिलष्यत इतिकामः 'इष्टः तं, समापूरयन् ननु किञ्चिदेव पूरयन्। तेन वदान्यतातिशयोव्यज्यते अन्यत्र 'कामम्, अनंगम, 'समापूरयन, समावर्धयन, चन्द्रमसः शृंगारे उद्दीपनविभावत्वेन तथात्वात्। 'सन्तापं, पीडाम, विभवनिधनकलहादिजन्याम्, परत्र ग्रीष्मादिजन्याम् 'तिरयन, निवर्तयन, एतेन कारुणिकतातिशयो द्योत्यते। सुकैरवाणि, शोभनकुमुदात्मकानि, अधिकधवलत्वादाह्लादकत्वाच्च, ननु केवलकैरवरूपाणि, यानि 'कुलानि, पितृ मात्रादिवंशाः, तानि 'आदीपयन्, प्रकाशयन। तथाच रूपकेण दोषस्य लवेनापि राहित्यं कुले प्रतीयते, इतरत्र कैरवाणां 'कुलानि, वर्गान्, 'सु' अतिशयेन 'आदीपयन्, विकाशयन। "सुपूजायां भृशार्थानुमतिकृच्छ्रसमृद्धिषु" इति मेदिनी। अतएव "सुभगसलिलावगाहाः इति शाकुन्तलश्लोकस्य 'सु, अतिशयेन, 'भगो, यत्नो, येषु ते सुभगा स्तथाविधाश्च सलिलावगाहा येषु ते तथा" इत्यर्थद्योतनिकायां व्याख्यानं संगच्छते भट्टचरणानाम्। यद्वा 'सु, शोभनम् विकाशयन्नित्यर्थः। 'करगतं, हस्तस्थितम्, ननु करं गच्छत। 'करं, राजग्राह्यभागम, 'गतम्, आश्रितमि-

तिवा, ग्राह्यकरापादानभूतमितियावत्, सर्वएव मेदिनीमण्डलस्था एतस्मा एव करं प्रयच्छन्तीतितात्पर्यम् । अन्यच्च 'करः, किरणः,"वलिहस्तांशवः कराः" इत्यभिधानात् । मेदिन्यामण्डलं, नतु त्रिचतुरानेवदेशान् । 'प्रतिभासयन्, शोभयन्, अभंगश्लेषालङ्कारः । भारतेश्वरे चन्द्रमाहश्यं तद्विषयककविनिष्ठप्रीत्यात्मकप्रधान ध्वन्यमानभावांगतया गम्यत इति ॥ ३५ ॥

असौ विजयतेतरां प्रणतमौलि पृथ्वीपति
विपद्विपुलवारिधि प्रतिविधान कुम्भोद्भवः ।
प्रतीपनृपवाहिनी प्रलयचित्रभानुः स्फुरत
प्रभूतनिधिमण्डल प्रथित राजराजोमतः ॥३६॥

असाविति । असौ भारतेशः । विजयतेतराम् सर्वोत्कृष्टतया अतिशयेन वर्तते । कथमेतदित्युत्थितायामाकांक्षायां प्रणतेत्यादि योग्यत्वादिव्यञ्जकं विशेषणचतुष्टयम् तेन न समाप्तपुनरात्ततामसक्तिः । प्राप्नोतिच परिकरालङ्कारः । 'प्रणतः, प्रकर्षेणनतः, नकेवलं नतः । 'मौलिः, मूर्धा यस्य तादृशः, पृथ्वीपतिर्यस्मिन्निति बहुव्रीहिगर्भितोबहुव्रीहिः । प्रकृतनृपाविषयिणीतरपृथ्वीपतिनिष्ठारतिर्भावः प्रधानध्वनिभावांगतया व्यज्यते, तेनच प्रेयोऽलङ्कारः । विपदेव दुस्तरतया विपुलोवारिधिः, तस्य 'प्रतिविधाने' निराकरणे, 'कुम्भोद्भवः, अगस्तिमुनिः । महाविपदोऽपि समूलघातं हन्तेतिभावः । 'प्रतीपाः, विरोधिनो, ये नृपाः तेषां या 'वाहिन्यः, सेनाः, ता एव'वाहिन्यः, नद्यः "वाहिनीस्यात्तरङ्गिण्यां सेना सैन्यप्रभेदयोः" इति मेदिनी । तासु प्रलयचित्र भानुः, प्रलयकालिकस्सूर्यः । यथा प्रलये सूर्यः सर्वामेव नदीं शोषणेन निर्वंशं नयति, तथायमपि रिपुसैन्यानि नाशयती

तिभावः। वीररसो भावांगतया व्यंग्यः, तेन रसवदलंकारः। 'स्फुरन्ति, प्रकाशमानानि, 'प्रभूतानि, बहूनि यानि 'निधिमण्डलानि, पद्म शंखादीनि, तदुक्तं शब्दार्णवे "पद्मोऽस्त्रियां महापद्मः शङ्खो मकरकच्छपौ मुकुन्दकुन्दनीलाश्च खर्वश्च निधयोनव" इति। तेषु 'प्रथितः' ख्यातः, 'राजराजः' धनाधिपः। विभवातिशयोव्यङ्ग्यः। श्लिष्टशब्दनिबन्धनं केवलपरम्परित मश्लिष्टशब्दनिबन्धनमालारूपं रूपकमलंकारः। पृथ्वी वृत्तेन निबद्धेऽत्र श्लोके पृथ्वीतिपदोपादानेन विच्छित्ति विशेषो भवतीति बोध्यम्। दृश्यते चैवं गीतगोविन्द लक्ष्मीसहस्रादौ काव्य इति॥ ३६॥

आनेत्री किलकाञ्चनस्थितिमतिव्याकोशपद्माश्रिता
सा कार्तस्वरकुम्भनिर्यदमृतस्नाता सदा राधिता।
गोविन्दाङ्घ्रि सरोजसेवनरता श्वेतांशुको दित्वरी
चक्रोद्भासिशया जनस्य जननी लक्ष्मीश्वरी राजते॥३७॥

आनेत्रीति। किलेति निश्चये। 'काञ्चनानां, सुवर्णानां, स्थितिम् 'आनेत्री, प्रापयित्री, काञ्चनदानकर्त्रीति यावत्। 'काञ्चन' कामपि अपूर्वां, 'स्थितिं, मर्यादां, नेत्रीतिवा, तृन् प्रत्ययान्तोऽयं नेत्रीशब्दः अतो नकर्मषष्ठ्याः प्रसक्तिः, नलोकाव्ययेत्यादिना तत्प्रतिषेधात् 'अतिव्याकोशया, प्रकृष्टया प्राणिनामुपकारकारिण्येतियावत्, शोभाशालिन्या, 'पद्मया' लक्ष्म्या, आश्रिता, नतु पद्मम्, तेन गुणगणातिशयो व्यज्यते। व्याकोशस्य कुसुमधर्मस्य पद्मायां बाधादुक्तार्थे लक्षणायां तदतिशयः पुरोक्त रीत्याद्योत्यते। नितान्तं काञ्चनस्थितिं प्रापयित्रीतिवा। "अतिशब्दः प्रशंसायां प्रकर्षे लंघनेऽपि च। नितान्तासम्प्रतिक्षेप वाचकोऽप्येष दर्शितः,, इति मेदिनी। निरुक्तपद्माश्रितत्वस्य पुरोदितप्रापयितृतायां हेतुतया का-

व्यलिङ्गमलङ्कारः। 'सा, विदिता। ख्यातेतियावत्। कार्तस्वरकुम्भेभ्यः, सौवर्णघटेभ्यः, "महारजतकाञ्चने रुक्मं कार्तस्वरम्,, इत्यमरः।'निर्यद्भिः, निर्गच्छद्भिः, 'अमृतैः, सलिलैः स्नाता, उदात्तालङ्कारः। 'सद्भिः, साधुभिः पण्डितैः मान्यैश्च आराधिता, तेन सन्निष्ठा लक्ष्मीश्वरीविषयिणी प्रीति र्भावः कविनिष्ठ तादृश भवानध्वानिप्रीत्यङ्गतया प्रेयोऽलङ्कारः। 'सदा, सर्वदा, आराधितेतिवा। 'सत्, ब्रह्म, आराधितं ययेतिवा "ओं तत्सदिति निर्देशोब्रह्मणस्त्रिविधः स्मृतः" इत्यभिधानात्। एतत्पक्षेऽपि कथिता लंकारः। गोविन्दस्य वासुदेवस्य नतु साधारणस्य देवस्य, अंघ्रिसरोजयो स्सेवनेरता, तथाच भगवद्विषयिणी प्रीतिर्भावाङ्गतया व्यज्यमाना प्रेयोऽ लंकारं सम्पादयति। यद्वा 'गोविन्दस्य, गोविन्दठक्कुरस्य पूर्वजस्य' अङ्घ्रि सरोजे यस्मिन, तथोक्तस्य निजकुलस्य सेवनेरतेति। अन्यत् पूर्ववत्। अथवा गोविन्दांघ्रिसरोजयोः 'सेवनेषु, सेवकेषु, भगवद्भक्तेषु रतेति कर्तरि ल्युटो विधानात्। अथवा 'गोविन्दस्य, वाचस्पतेः, अंघ्रिसरोजयोः सेवकेषु, विद्वत्स्वितियावत्। रता भक्ता। अथवा गोविन्दस्योक्तस्य सुराचार्यस्य अंघ्रि सरोजसेवकेषु सुरेषु रता, नतु तेषु कस्यापि विद्वेषिणी। तेनच स्मार्त्त सम्प्रदायवत्त्वं प्रतीयते। यथा शैवः शिवएव वैष्णवः विष्णावेव शौरः शूरएव, शाक्तः शक्तावेव रतः, तथा नेयमितिभावः। "गोविन्दोवासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ" इति विश्वः॥ श्वेता, अंशुः, दिशा ययेतितथोक्ता, दिग्व्यापिकीर्तिमतीति भावः। श्वेतः 'अंशुः, रश्मिर्यस्या इतिवा "अंशुरर्कप्रभोस्त्रेषु नाशातृष्णा दिशोः स्त्रियाम्" इतिमेदिनी। 'उदित्वरी' उदयमासादयित्री। श्वेतः अंशुर्यस्येति श्वेता 'अंशुः, दिशायेनेतिवा तथोक्तो विधुः तद्वदुदित्वरीतिवा, लुप्तोपमा। 'चक्रेण' चक्रास्त्रचिह्नेन, उद्भासितः 'शयो' हस्तो यस्यास्सा। अतेन वपुषोक्तं महाराजाकाञ्चन सूचितम्। जनस्य

जननीव पालिनी । दृश्यन्तेच तत्सदृशे तत्प्रयुक्तयः प्रागावेदिताः । जनस्येत्येकत्वमविवक्षितं प्रकृत्यर्थतावच्छेदकेऽन्वितत्वेन विवक्षितं वा, तच्च "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति सूत्रसिद्धम् । अतएव सम्पन्नोव्रीहिरितिवाक्यस्य व्रीहि सामान्ये सम्पन्नत्वबुबोधयिषया प्रयुक्तस्य उपपद्यते प्रामाण्यम् । अधिकं व्युत्पत्तिवादे व्युत्पादितं जिज्ञासुभिरनुसन्धेयम् । राजते ननु केवलमस्ति । अत्र पूर्वोक्तानि विशेषणानि दीपनस्य योग्यत्वं व्यञ्जयन्ति तदाश्रयत्वोपपादकानीति परिकरालङ्कारः । अत्र प्रकरणेन प्रथममभिधया निरुक्ते बोधे जाते पश्चादस्य वाक्यस्यानेकार्थक पदघटितत्वाध्यवसायाज्जायमानं वक्तृतात्पर्यज्ञानमभिधान्तरग्रहेण सध्रीचीनं द्वितीयार्थं व्यञ्जनयैव वृत्त्या सम्पादयति तदुक्तम् "अनेकार्थस्य शब्दस्य प्रस्तावाद्यैर्नियन्त्रिते । एकत्रार्थे ऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया" इति । सच द्वितीयार्थः 'सा, 'एन, विष्णुना सहिता "अकारो वासुदेवस्स्या दित्यभिधानात् । सकल जनप्रसिद्धेति वा, कविसमवेतानुभवगोचरीकृत तत्तत्प्रकारवतीति वा । 'काञ्चन, अनिर्वचनीयाम् 'स्थितिं, कैवल्यरूपां ब्रह्मात्मकतामिति यावत् "यतोवाचो निवर्तन्ते अप्राप्य मनसा सह । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इति भगवद्गीतावचनात् । विभवानामवस्थितिं वा, आनेत्री, अतिआनेत्रीतिवा । 'अतिव्याकोशे, प्रकृष्टविकशिते, 'पद्मे, कमले 'आश्रिता' स्थिता । कार्तस्वर कुम्भेभ्यः मत्तगजोद्धृतेभ्यः निर्यद्भिः 'अमृतैः, सुधाभिः स्नाता, तथाहि तन्त्रे लक्ष्म्याध्यानम् "कान्त्या काञ्चनसन्निभां हिमगिरि प्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्त हिरण्मयामृतघटैरासिच्यमानां श्रियम् । बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां क्षौमाबद्ध नितम्बबिम्ब ललितां वन्देरविन्दस्थिताम्" इति एवं "तथैव वैष्णवीशक्तिर्गरुडोपरि

संस्थिता । शंखचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ" (१) इति । यद्वा चक्रोद्भासिनि हरौ शेते इति चक्रोद्भासिशयेति । "शयः शय्याहिपाणिषु" इति मेदिनी । सदाराधितेत्यादि पूर्वोक्तार्थकम् । जनस्य जननी "भार्गवी लोकजननी" इत्यमरः । 'लक्ष्मीश्वरी, लक्ष्मीरूपा ईश्वरी, राजत इति । इह द्वितीयार्थवर्णनमसम्बद्धं मामसाङ्क्षीत् इति लक्ष्मीश्वरीलक्ष्म्योरुपमेयोपमानभावः कल्प्यते तदत्र लक्ष्मीश्वरी लक्ष्मीश्वरीव इत्युपमालङ्कारोऽभिधा मूलया व्यञ्जनया प्रतीयते, तेन चेयमवश्यमुपास्येति व्यङ्ग्यार्थमूलया व्यञ्जनया गम्यते, एवञ्च तथैव तद्वर्णनस्यावश्यकत्वमितितद्वर्णनारम्भो युक्तियुक्त इतिबोध्यमितिसंक्षेपः ॥ ३७ ॥

आसीद्दासीभूतासीमभूमीतलासीनसातशाशिभूसुरसुना सीर नासीरवदाचरिता सीमासमासंकशुकसूक्ष्मताधरीकृताणुप्रमुखशेमुषीकोचण्डपण्डीकृतोद्दण्ड प्रचण्डचण्ड वैतण्डिकोपमितसवन्मदगण्डवेतण्डपाखण्ड पाषण्ड मण्डलाखण्डलाभिधान पण्डितप्रकाण्डकाण्डपुण्डरीक मार्तण्डमण्डलविस्मारित विपश्चिन्निकुरम्बमण्डनमण्डन प्रवेकदूरदर्शि वसुमतीशिखण्डिखण्डिकाताण्डवितांडीर क्षीरनिधि तीरकुण्डलितहिण्डीर पाण्डुरानवदलित शा-

---

(१) नच चक्रोद्भासिशयायाः पद्माश्रितत्वायोगादयोग्यताप्रसङ्ग इति वाच्यम्, तयोर्भेदाभावात् दृश्यतेचैवमेव स्तवेषु बहुलेषु, ब्रह्मण स्सृष्टिकर्तृत्वे विष्णो स्तथात्वबोधकानामागमानामपि प्रामाण्यमप्यतएवोपपादितं वेदितव्यम् । किञ्च द्वितीयव्याख्यायां नोन्मेषोऽपि निरुक्तशङ्काया इति ॥

(२) श्वोभिरेतिपाठः

श्वत प्रभूतभूरिभूषण विज्ञातसमज्ञाश्रित महीवितत मह्ा मह महिम महितसमहितपरः, शङ्कर इवापरः ।

अथ लक्ष्मीश्वरीचरितं वर्णयितुकामः कविस्तदङ्गतया तस्याः पूर्वजेषु वर्णनीयेषु सर्वथा प्राधान्यादादौ गोविन्दठक्कुरं वर्णयति आसीदित्यादिना । तत्र आसीदिति गोविन्दोनामिथिलायामिति परेणान्वितार्थकम् । नामेति लुप्ततृतीयान्तमव्ययम् । तथा च तादात्म्यं गोविन्दपदेन च स्वाभिधेयो बोध्यते, तथा च नामाभिन्नेन गोविन्दपदेनाभिधेयो मिथिलायामासीदित्यर्थः । बहुभिर्विशेषणैर्गोविन्दं विशिनष्टि, दासीभूतेत्यादि, दासीभूता नतु दासीकृताः, तेन च सञ्चिचयनिष्ठा गोविन्दविषयिणीरतिर्ध्वन्यते । च्विप्रत्ययेन चाभूततद्भावबोधकेन तत्र माहात्म्यातिशयस्तथा । आसीमभूमीतले 'आसीनाः' स्थिताः, आसेश्शानचः प्रधानक्रियानुरोधेनातीतकालार्थकत्वात् "धातुसम्बन्धे प्रत्ययाः" इति हि भगवतः पाणिनेरभिधानम् । नतु क्वचिदेव भूतले स्थिताः । सतामिमास्सातास्ताश्च राशयःसतां विदुषां साधूनां मान्यानाञ्च समुदाया इत्यर्थः । ते यस्य स तथा । व्यतिरेकोऽलङ्कारः, सातराशिगतनिकर्षवर्णनात् । श्रुतिवृत्त्यनुप्रासौच एवञ्च शब्दार्थालङ्कारयोस्संसृष्टिः, एकाश्रयानुप्रवेशसङ्करलक्षणे आश्रये मात्रपदाप्रवेशे शब्दालङ्कारयोस्तयोस्संकरः, इतरथा संसृष्टिरेवपक्षेऽपि । भूसुरेति । 'भूसुराणाम्, द्विजानाम्, 'सुनासीरः, इन्द्रः' श्रोत्रिय सुनासीरेतिपाठेऽपि स्पष्टएवार्थः ॥ नासीरेति । 'नासीरवत्, सेनामुखवत्, परान् पराजेतुं सैन्याग्रगामिवदितियावत्, आचरिता, "सेनामुखं तु नासीरम्" इत्यमरः । एतद्विशेषणञ्च वक्ष्यमाणाधरीकरणक्रियाव्यज्यमानगोविन्दनिष्ठ परमापुरिविजयत्वयोति, अतोनापुष्टार्थत्वमलङ्कारः । प्रक-

मुपमाचालङ्कारौ। तयोस्संसृष्टिः। 'असीमा, निरवधिविषया, नचेह कथितपदत्वदूषणमापद्यते, सीमन्निति पदस्य द्विधोपादानादितिशङ्कनीयम्, एकत्र सीमन्निति नान्तपदस्य परत्रसीमा शब्दस्याजन्तस्य सद्भावात्। मुख्यार्थवाधेन परत्र भिन्नार्थ स्यपदर्शितत्वेनोभयत्रसमानशब्दस्य सत्त्वेऽपि क्षत्यभावाच्च। एतेनार्थपौनरुक्त्यमपि परास्तं वेदितव्यम्। 'असमा, अनुपमा, तेन अनन्वयालङ्कारोव्यज्यते। 'असंकशुका, अनस्थिरा, "संकशुकोऽस्थिरे" इत्यमरः। स्थिरत्वं मतौ द्योत्यते, नचैतस्य वाच्यभूतस्थिरभिन्नभेदाभेदवत्वेन व्यङ्ग्यत्वं न सम्भवतीतिवाच्यम्, स्यादेवं यदि आश्रयभेदस्य व्यङ्ग्यत्व नियामकत्वं स्यात्, नचैवं, पर्यायोक्तालंकारव्याकोपप्रसंगात्, किन्तु स्वावच्छेदकभेदस्य वाच्यतावच्छेदकानुयोगिकस्य, तथैव मम्मटादीनां स्वरसात्, किञ्च तद्धर्मवच्छिन्नभेदस्य तद्धर्मानात्मकत्वपक्षेऽनपवादमेव व्यङ्ग्यत्वमुक्तपक्षेऽपि। पर्यायोक्तालङ्कारः, स्थिरत्वेन रूपेण विवक्षितस्य स्थिररूपार्थस्य विच्छित्तिविशेषाधायकेन स्थिरभिन्नभेदेनाभिधानात्, "केनचिद्रूपेण व्यञ्जनया लभ्यस्यार्थस्य ततोऽपि चारुतररूपेण यदभिधया प्रतिपादनं, तत्पर्यायोक्तम्" इति रसगङ्गाधरमर्मप्रकाशिकायां नागेशेन प्रतिपादनात्, अस्ति च स्थिरत्वापेक्षयाऽनस्थिरत्वस्य चारुतरत्वं सहृदयहृदयसाक्षिकं, भिन्नत्वञ्च युक्त्यनुगृहीतमितिविभावनीयम्। सीमासमेत्यत्र च्छेकानुप्रासः, अयमपि संसृज्यते परैरलङ्कारैः। सूक्ष्मतया अधरीकृतः, नत्वधरः कृतः, अणूनां द्व्यणुकानां 'प्रमुखः, प्रधानं परमाणु र्ययेति तादृशी, परमाणुश्च "जाकान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः। तस्य षष्ठतमोभागः परमाणुस्स उच्यते" इत्युक्तलक्षणः। अत्र "तस्य षष्टितमोभागः" इति पाठस्तु प्रामादिकएव, द्वाभ्यां परमाणुभ्यां द्व्यणुकं, त्रिभिस्तैस्त्र्यणुकमिति हि

काणादसिद्धान्तः सत्येवं कथमिव त्र्यणुकरूपस्य दृश्यमानस्य सूक्ष्मरजसः षष्ठितमभागत्वं परमाणौ भवेदित्यलमप्रस्तुतेन विचारेण । शेमुखी, विशेषबुद्धिः । न तु साधारणी, शेते इतिशे, शेः विच्, मोहः, तं मुष्णाति या साहि शेमुखी, मुषस्तेये (क्र्या०) मूलविभुजादित्वात् कः, गौरादित्वात् ङीप्, "धीः प्रज्ञा शेमुषी मतिः,, इत्यमरः । परमाण्वपेक्षया विशेष प्रतिपादनात् व्यतिरेकालङ्कारः । च्वि प्रत्ययेन चायं प्रत्यन्तरसापेक्षः प्रतीयते । निरुक्ता शेमुखी यस्य स इति ॥ उच्चण्डेति । 'उच्चण्डम्, शीघ्रम, नतु विलम्बेन, 'पण्डीकृतानि, निष्फलीकृतानि, तेनच विज्ञतातिशयोव्यज्यते, एतदन्तरेण वक्ष्यमाणाभिधानस्य निः फलीकरणं हि नोपपद्यते । पण्डपदमुख्यार्थस्य क्लीवत्वस्यायथासंस्थानवत्त्वरूपस्य प्राणिधर्मस्योक्तौ बाधात्कथितार्थे लक्षणावृत्तेराश्रयणान्नैःफल्यातिशयोऽत्यन्ततिरस्कृतवाच्यं ध्वन्यते, इयञ्च लक्षणा गौणी सारोपा, सादृश्यसम्बन्धप्रयुक्तत्वात् । नच नेयार्थता, निः फलेऽर्थे पण्डपदस्य रूढेः प्रयोजनस्य च दर्शितस्य सद्भावात् । अत्रापि च्वि प्रत्ययस्य प्रागुदीरित दिशाव्यङ्ग्यार्थोबोध्यः । 'उद्दण्डानाम्, उद्गताभिमानवताम्, "अभिमाने ग्रहे दण्डः,, इति विश्वः । 'प्रचण्डानाम्, प्रतापवताम्, "प्रचण्डोदुर्वहे श्वेतकरवीरे प्रतापिनि" इति मेदिनी । 'चण्डानाम्, तीव्राणाम्, "चण्डस्तु तीव्रे दैत्यविशेषेच" इति हेमचन्द्रः । यमकालङ्कारः । 'वैतण्डिकानाम्, स्वपक्षमसंस्थाप्यैव परपक्षमुपालभमानानाम्, "स स्वपक्षस्थापनाहीनो वितण्डा" इति प्रथमाध्यायस्य द्वितीयाह्निके महर्षेर्गौतमस्य सूत्रम् । प्रतिपक्षस्थापनाहीना विजगीषु कथा वितण्डेत्यर्थः पर्यवस्यति तस्य, वितण्डया प्रवर्तमानो वैतण्डिकः । स्रवंन् 'मदो, दानवारि, याभ्याममू स्रवन्मदौ, तौच 'गण्डौ, कपोलौ, येषां ते स्रवन्मदगण्डाः, तेच 'वैतण्डयाः, गजपतयः. तैरुपमिता येस्तेषाम्,

नतु सामान्यानाम् । उपमानोपमेयभाव प्रातिलोम्यात्प्रतीपालङ्कारः । 'अखण्डानाम्, निखिलानाम्, "समग्रं सकलं पूर्णमखण्डं स्यादनूनके" इत्यमरः । 'पाषण्डस्य, नास्तिकस्य, "पालनाच्चत्रयीधर्मः पाशब्देन निगद्यते । तं खण्डयन्ति ते यस्मात्पाषण्डास्तेन हेतुना" इतिस्मरणात् । मण्डलानाम् 'आखण्डलस्य, इन्द्रस्य । 'अभिधानानि, उक्तयः, येन स-तथा । एवञ्च तादृशपाषण्डमण्डलाखण्डलाभिधानवैयर्थ्यकारित्वेन पा-ण्डित्यस्य धर्मे श्रद्धायाश्चातिशयोध्वन्यते ॥ पण्डितेति । प्रशस्तः पण्डि-तः, 'पण्डितप्रकाण्डम्, "प्रकाण्डमुद्धतल्लजौ प्रशस्तवाचकान्यमूनि" इति नामलिङ्गानुशासनम् । तेषां काण्डंवर्गः यमकालङ्कारः । सएव कीर्त्या पाण्डुरत्वात् 'पुण्डरीकं, सिताम्भोजम्, तत्र 'मार्तण्डस्य, रवेः, मण्डल-म् । सकलस्य श्रेयसोविपश्चितः प्रमोदावहः शोभाकारक इतिभावः । अ-श्लिष्टशब्दनिबन्धनं केवलपरम्परितरूपकमलङ्कारः ॥ विस्मारितेति । विस्मा रिताः 'विपश्चितो, विदुषो, 'निकुरम्बस्य, समूहस्य, "निकुरम्बं कद-म्बकम्" इत्यमरः । 'मण्डनस्य, भूषणम्, 'मण्डनः, मण्डनमिश्रः, 'प्रवे-कः, प्रधानं येषां ते दूरदर्शिनः, नतु साधारणाएव विद्वांसः, येन तथा भूतः । निरुक्त दूरदर्शि प्रतियोगिकं सादृश्यमाधिक्यं वा गोविन्दे व्यज्य-ते, सचायं सन्देहसङ्करोध्वनेः । पर्यायोक्तं यमकञ्चालंकारौ । तयोस्सं-सृष्टिः ॥ वसुमतीति । 'वसुमत्याः, पृथिव्याः, शिखण्डिखण्डिका, शि-रोभूषणम्, तेन ततू माहात्म्यातिशयोद्योत्यते । यमकालंकारः ॥ ताण्ड-वितेति । 'ताण्डविताकृतनृत्यायाः, क्षीरनिधेः नत्वन्यस्यतीरे, तेन डिण्डीरे धावल्यातिशयोव्यज्यमानः कीर्तौ वैमल्यातिशयं प्रत्याययति । 'कुण्डलि-तः, पुञ्जीभूतः । यो 'हिण्डीरः, फेनः, "हिण्डीरोऽब्धिकफः फेनः,, इत्य-मरः । तद्वत् पाण्डुरया, श्वेतया, लुप्तोपमाऽलङ्कारः । 'अनवदलितया,

अपराभूतया, 'शाश्वतया, सार्वदिकया, 'प्रभूतया, प्रचुरया, 'भूरीणां, बहूनाम्, भूषणेन शोभाधायकया, 'विज्ञातया, ख्यातया, 'समज्ञया, कीर्त्या, आश्रितः। नतु तादृशीं कीर्तिमाश्रितः। तेनच गुणगणगौरवं व्यज्यते। एतेन चन्द्रापेक्षया कीर्तौ वैधर्म्यप्रदर्शनेन व्यतिरेकालंकारः सहि राहुदशनैरवदलितः आशाश्वतिकः एकः ईशैकशिरोभूषणश्चेति॥ मही ति। 'मह्यां, पृथिव्याम्, विततः, यशसेत्याशयः। महता 'महेन, उत्सवेन, महिम्नाच 'महितः, पूजितः। महीविततेन महतामहेन महिम्ना च महितइतिवा। महि महीत्यत्र महितमहितेत्यत्र च यमकमलंकारः॥ समेति। 'समेषां, सर्वेषाम्, 'हिते, कल्याणे, 'परः, परायणः। यद्वा समः सकलः, मया लक्ष्म्या सहितोहरिर्वा हितपरोयस्य। समहितः परश्चेतिवा 'परः, प्रकृष्टः॥ शंकरइति। 'अपरः, द्वितीयः, 'शंकरइव, शंकराचार्य इव, द्वितीयशंकराचार्यतया सम्भावितइत्यर्थः, तथाच सादृश्यस्यानभिधेयत्वेनोपमाया आरोपाभावेन रूपकस्य, इव पदसमभिव्याहारेण चातिशयोक्तेरसम्भवात्सम्भावनायास्तद्वाच्यत्वेन शंकरस्य चैकतया वाच्याद्रव्योत्प्रेक्षालंकारः। गौरीरीतिः। इह निरुक्तेषु व्यङ्ग्येषु कवितात्पर्यस्य सत्त्वेन शब्दचित्रार्थचित्रयोस्सद्भावेऽपि नाधमकाव्यतापत्तिः, यथा चैतत्तथा प्रागभिहितमनुसन्धेयमिति।

विविध विधि विबोधित विधानानुशोभिसन्ध्यात्रयानुबन्धिमेध्यसंशोधित प्राज्यसान्नाय्यनीलतिलसितशूकहवनसंवर्ध्यमान सामिधेनीसमुपधीयमानेन्धनसमिद्धतरश्रौत वैश्वानर प्रोद्धतसुगन्ध धोरणधूम्यावद्धवन्धुरधारान्धकारातिवन्धुरधरातलैकसोत्सेध धर्मध्वज-

धुरन्धरावन्ध्यसन्धानविद्धसाधुबुधितानवधिमाधुरीक-संसिद्धिधवल तमधामधृत प्रवृद्धश्रद्धासमेधितद्वैजाताभिजनप्रधानश्रोत्रियवंशविपुलमौक्तिकप्रसवावतंसः।

विविधेति । 'विविधेन विधिना, "अनुदिते जुहोति, उदिते जुहोति, सायं जुहोति" इत्यादिना प्रमाणान्तराप्राप्तकर्मविधायकेन वाक्यजातेन, 'विबोधितस्य, इति कर्त्तव्यतावेदकवाक्यसहकारेण ज्ञापितस्य, विधेरंशत्रयेण सापेक्षत्वात् तच्च साध्यं साधनमितिकर्तव्यता च। यथा चैतेषां वाक्यार्थबोधेमानं तथोपपादितं न्यायप्रकाशटिप्पण्यामस्माभिः। अतएव विपद मपि सार्थकम्। 'विधानस्य, क्रमस्य, करणे ल्युट्। सच द्विविधः शाब्दः आर्थश्च यत्र कल्पनागौरवं प्रसज्यते, तत्र शाब्दक्रममपहायार्थक्रमआद्रियत इति न्यायमालायां स्पष्टम्। अनुरोधिना 'सन्ध्यात्रयस्य, प्रातरादेः, सम्बन्धिना तिसृषु सन्ध्यास्वित्यर्थः। 'मेध्यस्य' पवित्रस्य, 'संशोधितस्य, प्रोक्षणादिनोत्पादित शक्तिकस्य, इयमेवाधेयशक्तिरित्युच्यते। 'प्राज्यस्य, प्रचुरस्य, 'सान्नाज्यस्य, हविषः, "प्राय्यसान्नाय्यनिकाय्यधाय्येत्यादिना साधुपतत्पदम्। "सान्नाय्यं हविः" इत्यमरः। नीलतिलस्य सितशूकस्य, यवस्य, "शितशूकयवौ समौ" इत्यभिधानात्। हवनेन 'संवर्ध्यमानात्, वृद्धिं प्रापितात्, 'सामिधेन्या' समिध आनीयन्तेऽनया' ऋचा इति सामिधेनीऋक्' तया "समिधामाधानेष्येयण्"। "ऋक्सामिधेनीधाय्या च यास्यादग्निसमिन्धने" इत्यनुशासनम् 'समुपधीयमानैः, वितीर्यमाणैः। इन्धनैः 'समिद्धतरात्, अतिशयेन दीप्तात्। 'श्रौतवैश्वानरात्, श्रौताग्नेः। 'प्रोद्धतया, प्रोद्गतया, सुगन्धस्य 'धोरण्या, प्रापयित्र्या, "वाहनं यानं युग्यपत्रञ्च धोरणम्" इत्यमरः। 'धूम्यया, धूमस्य संहत्या, पाशादिभ्यो यः। 'आबद्धाभिः, जनिताभिः, 'बन्धुराभिः, उन्नताभिरा-

नताभिश्च, "वन्धुरं तून्नतानतम" इत्यमरः । धाराभिः, अविच्छिन्न सन्तानैः, अन्धकारेण 'अतिवन्धुरम्, अतिमनोज्ञम्, धरावलं भूतलं येन सतथोक्तः । ध्वनान्वयिकृतिजन्यत्वं विग्रहस्थायास्तृतीयाया अर्थः । ए-केति । 'सोत्सेधस्य, उन्नतस्य " उत्सेध उन्नतिः " इत्यनुशासनात् । धर्मध्वजस्य 'एकः, स्वसजातीयद्वितीयरहितः, धुरन्धरः । यद्वा तादृशा तिवन्धुरे धरातले एको धर्मध्वजधुरन्धरः निरुक्तध्वन एतत्कर्तृकत्वस्य व्युत्पत्तिवैचित्र्येण लाभइति । अवन्ध्येति । 'अवन्ध्यम्, अनि ष्फलं, स-न्धानं प्रतिज्ञायस्यसः । नच "वन्ध्यः षण्ढः,, इत्यनुशासनं वन्ध्यपदस्या भिधाग्राहकम् एवञ्च निःफलेतत्पदस्याभिधाशक्तेरप्रामाणिकतया क्लीव प्रतियोगिकसादृश्यसम्बन्धस्यसत्वेन साध्यवसान गौणलक्षणायाएवाश्रय-णीयतया प्रयोजनस्य रूढेश्चविरहेण नेयार्थताप्रसङ्गः रूढि प्रयोजनान्यत-रस्याभावे लक्ष्यार्थ वोधजनकत्वस्यैवतदात्मकत्वादितिवाच्यम्, "अवन्ध्यं दिवसं कुर्यात् " " अवन्ध्यकोपस्यविहन्तुरापदाम् " इत्यादि प्रचुर प्रा-माणिक प्रयोगस्योक्तार्थे दर्शनात् रूढेः, नैः फल्यातिशयात्मकस्य प्रयोजन स्यचाक्षतत्वेनोक्तदोषानवतारात् । यद्वा अवन्ध्यं 'सन्धानं, ज्ञानं यस्य स इति " दीपिकाद्वितयंकन्ये प्रदीपद्वितयं सुतौ, स्वमतौ सम्यगुत्पाद्य गो-विन्दशर्म विन्दति " इति काव्यप्रदीपान्ते स्वयमभिधानात् । विद्धेति । 'विद्धं, क्षिप्तम् अधरीकृतमिति यावत्, " विद्धस्याद्वेधितेक्षिप्ते सदृशेवा-धितेत्रिषु " इति विश्वमेदिन्यौ । साधूनाम् असकृत्पूर्वोक्तार्थकानाम्, 'वु-धितं, ज्ञानंयेन सः भावेक्तप्रत्ययः, साधुसमधिकवुद्धिमानिति भावः । व्यतिरेकालङ्कारः यद्वा अवन्ध्यसन्धानेन हरिश्चन्द्रादिना 'विद्धः, सदृशः, साधु, सम्यक् 'वुधितं, ज्ञानं यस्य सइति । अनवधीति, अनवधिः परि-च्छेदेन सीमनाचरहिता, निश्छिद्रावा माधुरीयस्या स्तथाभूता, 'संसिद्धिः

प्रकृतिर्यस्यसः । " अवधिस्त्ववधानेस्यात्सीम्निकालेबिलेपुमान् " इति मेदिनी । " संसिद्धिप्रकृतीत्विमे " इत्यमरः । धवलेति, धवलतमेन ' धाम्ना तेजसा सात्विकेनवाप्रभावेणधृतः, अथवा अनवधिमाधुरीक इतिच्छेदः, ' संसिद्धं , मन्त्रादीनामनुष्ठानेन सिद्धं, यत् धवलतमं धाम सामर्थ्यं तेजोवा, तेनधृतइत्यर्थः "धामशक्तौ प्रभावेच तेजोमन्दिरजन्मसु" इति विश्वः । " संसिद्धिः प्रकृतौ सिद्धौ " इत्यमरः । ननु धृततादृशधामेवि माहात्म्यातिशयोऽन्यङ्ग्यः ।

नियतिभेद शलभ सुलभोच्छेदिदशाविशेषानपेक्षि श्रीकान्त संक्रान्त संततोद्योतमानध्यान प्रदीपावधूत मूल भूतानाद्यविद्याध्वान्ततया ऽवधारिताश्रितानेकोपनिषदङ्गनोद्गीयमानानन्दमन्दिरः ।

प्रवृद्धेति । प्रवृद्धया, प्रौढया, श्रद्धया 'समेधितः, समुपचितः, यद्वा प्रवृद्धाश्रद्धायस्यसः, अतएव ' असमः , अतुलित एधितः अनुपमवृद्धिमानितियावत् । द्वैजातेति, 'द्विजाते, विप्रस्य अयम् 'अभिजनः, अन्ववायः, "कुलान्यभिजनान्वयौ" इत्यमरः । तत्र प्रधानम् यः श्रोत्रियाणां पुरोदीरितानां वंशः सएववंशोवेणुस्तस्य विपुलो महान् , मौक्तिकप्रसवात्मकोऽवतंसःभूषणम्, वंशविशेषे मौक्तिकस्योत्पत्तेः । श्लिष्टशब्द निबन्धनं केवलपरम्परितरूपकमलङ्कार इति ॥ ० ॥ नियतीति । नियम्यन्ते, जन्य कार्याणि अनेनेति नियतिरदृष्टम् " नियतिर्विधिः इत्यमरः , तस्य 'भेद, विशेषः, प्रारब्धकर्मातिरेकिकमैव शलभः , पतङ्गः , निरुक्तकर्मण एव साक्षात्कारद्वारकध्यानात्मकनिदिध्यासनयोग नाश्यत्वात् यथाचैतत्तथावि

स्तरेणन्यायसूत्रतात्पर्यविवृतावुपपादितमस्माभिः । रूपकालङ्कारः । तस्य सुलभं यथास्यात् तथा उच्छेदी अपुनरुत्पादं नाशयिता । क्रियाविशेषणेनापिकर्मधारयस्य “ स्तोकनम्रास्तनाभ्याम् ” इत्यादि महाकवीनां प्रबन्धेषु दृष्टचरत्वान्नानुपपत्तिः अधिकमभिहितं प्राक् । इदञ्चवक्ष्यमाण व्यतिरेकपोषकंविशेषणमतोनापुष्टार्थता । एवमग्रेऽपि । ‘दशाविशेषस्य, अवस्थाविशेषस्य समयविशेषस्येतियावत् “ दशावस्थादीपवर्त्योः ” इति मेदिनी । ‘ अनपेक्षी, अनवलम्बी, सार्वदिक इति भावः । तत्प्रयोजनमभिहितं सांख्यदर्शनस्य तुरीयाध्याये “ इषुकारवन्नैकचित्तस्य समाधिहानिः ” इति । ‘ श्रीकान्ते , लक्ष्मीरमणेहरौ, नत्वन्यत्र, ‘संक्रान्तः , भक्त्यानिरन्तरत्वं गतः, तत्फलं यथा योगदर्शनस्य समाधिपादे “सतुदीर्घकालादरनैरन्तर्य सेवितोदृढभूमिः ” इति । हरिध्यानस्यावश्यकत्वं “तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाविद्यतेअयनाय ” इति पुरुषसूक्त

प्रज्ञाऽगणित गीर्वाणगणगुरुगीरथः, अनुश्रितभगीरथदशरथपथः । अशिथिलसौन्दर्यदमथपरिमथित–मन्मथः । कृत्स्नपृथिवी प्रथिता वितथपृथुलस्थास्नु सत्कथः ।

श्रुतेः । इतरविषयध्यानस्यानर्थ हेतुत्वम् “ असाधनानुचिन्तनं बन्धाय भरतवत् ” इति हि तत्र(१)त्यं सूत्रम् । ‘ सन्ततः , सम्यक् विस्तृतः, उत्तरोत्तरकालसम्बन्धीति यावत् । ‘ उद्योतमानः , अक्लिष्टः , यो ध्यानप्रदीपः, तेनावधूतं तिरस्कृतम्, ‘ मूलभूता, जगदुपादानभूताऽऽनाद्यविद्यैव आवरकत्वात् ध्वान्तंयेनतत्तया, परम्परितरूपकमलङ्कारः ।

(१) सांख्यदर्शनस्यम् ।

पूर्वमवधारितम् विशेषतो निर्णीतम् संशयात्परं विशेषदर्शनाज्जायमानस्य ज्ञानस्यावधारणत्वात् पश्चादाश्रितम्, अनेकाभि रुपनिषद्भिरेवाङ्गना-भिः उद्गीयमानः, नतु कथञ्चिदुच्यमानः, आनन्दोयस्य तथोक्तम्, परि-णामालंकारः उपनिषदि अङ्गनातादात्म्यारोपमान्तरेण तत्कर्तृकस्योद्गान-स्यासम्भवात् ' मन्दिरम्, आयतनं हरिस्वरूपं येनसः । ध्यानप्रदीप सं-क्रान्तेः पूर्वमनाद्यविद्यातिमिरावृततया साक्षात्कारासम्भवेन तादृशमन्दिर माश्रयितुमशक्य मित्याशयः । प्रसिद्ध प्रदीपापेक्षया ध्यानप्रदीपे व्यतिरेक प्रतिपादनेन तदभिधानोऽलङ्कारः । महिमशलभमुच्छिनत्ति, नवा 'दशावि-शेषं वर्तिकाविशेषम् नापेक्षते' नवाश्रीकान्तं संक्राम्यति, "नतत्रसूर्योभा-तिनचन्द्रतारकं नेमाविद्युतोभान्तिकुतोऽयमग्निः" इतिश्रुतेः तथाच भक्ते-रतिशयोध्वन्यते इतिकाव्यमेतदुत्तममिति ॥ ० ॥ प्रज्ञयाऽगणितः किमुत-कृतस्पर्धः, गीर्वाणगणस्य गुरुः नतुसाधारणः 'गीरथः, बृहस्पतिर्येन त-थोक्तः "गीरथस्तुबृहस्पतौ" इतिलघुरत्नकोषाभिधानम् । लोकोत्तरपा-ण्डित्यं ध्वन्यते ॥ अनुश्रितः भगीरथ दशरथयोः पथोयेन कुलोद्धारयितृत्वं सत्यप्रतिज्ञत्वंच व्यज्यते । 'अशिथिलाभ्याम्, गाढाभ्याम्, सौन्दर्यदम-थाभ्यांरामणीयकोपशमाभ्याम्, परिमथितः ' मन्मथः, कामोयेनसः । शमादित्वादथच् प्रत्ययेदमथ इति सिध्यति कामाधिकसौन्दर्यं तद्विजेतृ त्वंच व्यज्यते ॥ कृत्स्नपृथिव्याम् प्रथिता 'अवितथा, सत्या पृथुला पुष्टा, नतुतन्वी, स्थास्नुः, नतुक्षणभङ्गुरासत्कथा, सच्चरित्रं यस्यसः । महामहिमत्वं प्रतोयत इति ॥

सार्वभौमइव सदाचारेक्षणः । प्रमदवनमिव विमत्सरः ।
जामदग्न्यइव परशुभाकलनवर्धमानप्रमदः । कासारइव

मित्रोदयामोदित पद्मोद्भासितः। पावमानिरिव रामानन्दनो निगृहीताक्षश्च। मुदिरनादानुलासीव कृष्णघन प्रणयपराधीन हृदयः। जैमिनीयनयइव साहित्य भक्तिः। भारतइव धृतराष्ट्रविदितार्जुनगुणकीर्तिः। सरः प्रमुखमखइव समञ्चितसौम्यमूर्तिः। प्रोन्मदमत्तमातङ्गइव सुगतहृदयहारी, आम्नायइव सदालोकहितपरायणः। सन्मतिक्षितिपतिरिव मंत्रप्रयोगकुशलः।

सार्वेति। 'सदाचारे देशाचारे "यस्मिनदेशेय आचार सःसदाचार इष्यते" इतिस्मरणात्, समीचीनाचरणेवा सतां सुश्रूषणेवा ईक्षणं दृष्टिर्यस्य, अन्यत्र सर्वदाचारएवईक्षणंनयनं यस्यसः, राजानोहि चारचक्षुषोभवन्ति। उपमायाः श्लेषभित्तिकृतयातयोरङ्गाङ्गिभावसङ्करः। 'प्रमदवनम् रमण्यासहराज्ञः क्रीडावनम्, "स्यादेतदेवप्रमदवनमन्तःपुरोचितम्,, इत्यमरः। 'विमत्सरः, विगतः 'मत्सरः, अन्यशुभद्वेषो यस्मात्, इतरत्र 'विमत्, विहगयुक्तं सरोयत्र, नचात्रभग्नप्रक्रमत्वंदोषः, उपमेयोपमानयोरन्वयेरूपभेदस्याभावात्। 'जामदग्न्यः, परशुरामः, परेषां शुभस्याकलनेनवर्धमानः 'प्रमदः हर्षः, परत्र परशोरस्त्रस्य ,भायाः, दीप्तेराकलनेनवर्धमानः प्रमदः गर्वो यस्य, सः। मित्रेति। 'मित्रस्य, सुहृदः, उदयेन, वृद्ध्या, आमोदितया 'पद्मया, शोभया परत्र 'मित्रस्य, रवेः उदयेन प्रकाशेन आमोदितैः विकसितैः पद्मैः कमलैः उद्भासितः। यद्वा प्रकृते मित्रोदयामोदितः पद्मोद्भासितइति विशेषणयोः कर्मधारयः। पावमानिः मारुतिः। रामाणां रमणीनाम् अन्यत्ररामस्यआनन्दनः। लावण्यातिशयोध्वन्यते। निगृहीतम् अक्षमिन्द्रियमन्यत्ररावणकुमारोयेनसः। जितेन्द्रियइतिभावः। मु-

दिरनादानुल्लासी मयूरः । "केकीमेघनादानुल्लास्यपि इत्यमरः । कृष्णेघ-नेन सान्द्रेण, घनोपमे कृष्णेवा, अन्यत्रकृष्णेघनेश्यामे मेघे प्रणयेन प-राधीनं हृदयंयस्येति । नयोमतम्, साहित्येअलङ्कारशास्त्रे भक्तिरनुरागो-यस्य परत्रसाहित्ये समुदायत्वेभक्तिर्लक्षणायत्रसः । एकस्योद्देश्यतावच्छे-दकस्यत्वाभायइतरेतरयोगद्वन्द्वस्यसाहित्येलक्षणामाश्रयन्तिमीमांसकाः । धृतेति । धृतंराष्ट्रं राज्यंयेन तेनविदितोऽर्जुना धवला गुणस्य कीर्तिर्यस्य अन्यत्र धृतराष्ट्रेण पाण्डोरग्रजेन विदिता अर्जुनगुणयोः पार्थभीमयोः की-र्तिर्यत्रेति । "गुणः सूदे वृकोदरे" इतिविश्वः । सरइत्यादि । तड़ागादियो-गइव समञ्चिता पूजिता 'सौम्यस्य, सोमात्मजस्यबुधग्रहस्य अन्यत्र सौम्या रमणीया मूर्तिर्यस्य इति । सुगतोबुद्धः "सुगतोबुद्धः" इत्य-मरः, तस्य हृदयंरहस्यम् तस्य, अन्यत्र शोभनेन गतेन गमनेन हृदयस्य मनसः हारी बौद्धमत निराकर्तेतिभावः । 'आम्नायो, वेदः सदा सर्वदा लोकानां हितेकल्याणे, परब्रह्मतोब्रह्मगः आलोकः दर्शनम्, तदेवहितकार-कत्वात् हितंतत्र, परायणः । सर्वेषां वेदानां साक्षात्परम्परयावाब्रह्मण्येवता-त्पर्यम् । मन्त्रः मनुः प्रयोगोनुष्ठानं अन्यत्र मन्त्रो विचारः । कुशलः निपुणः । यद्वा प्रकृष्टे प्रकृष्टोयोगस्समाधिः प्रयोग इति

विधुरिवविबुधप्रसाद जनकोऽनन्त पदावलम्बनश्च कि-न्तु सकललोक कमनीयोदयो मित्रपतनेन मोदमा-नोऽमासुप्रीतान्वयश्च । अम्भोनिधिरिवपरितोषित सु-मनोव्रजः रत्नप्रबन्ध प्रसूतिश्च, किन्तु द्विजरोषागो-चरोऽजलात्मा च ॥ विलसत्कीलालोप्य विलसत्कीर्ति

लतः । समस्तमेदिनीपति मस्तकसरप्रसून पराग रागारुणतमीकृतचरणसरसिजोऽपिराजसेनाविधूतः ।

विधुरिवेति । विधुश्चन्द्रोहरिश्च, " विधुर्नाकर्पूरेन्दु विष्णुषु " इति मेदिनी । 'बुधप्रसादस्य, पण्डितप्रसन्नतायाः, अन्यत्र बुधग्रहप्रसन्नतायाः देवप्रसन्नतायाश्च, जनकः। बुधस्यचन्द्रात्मजत्वात् । अनन्तपदम् भगवत्पदम् आकाशः परत्र, तदेवावलम्बनंयस्य सकलेनकलोपेतेन अशेषेण वा लोकेन कमनीयएष्टव्य उदयोवृद्धिर्यस्य, मित्रस्यसुहृदः पतनेऽवनतौ नमोदमानः, अमायांदर्शे सुप्रीतः अन्वयोवंशोयस्य सतयोक्तः, तत्रतिथौ श्राद्धकारीतिभावः। चन्द्रस्तुनेदृशः तदुदयस्य वियोगिनाऽकाम्यत्वात्, मित्रस्य सूर्यस्य पतनेन मोदमानत्वात्, अमायां तदन्वयस्य सुप्रीतत्वाभावाच । तस्यहिक्षीणाशेषकलत्वंतदेतिश्लेषव्यतिरेकालङ्कारयोस्सङ्करः । परितोषितः सुमनसां सचेतस्कानां, परत्रा मृतादिदानेन देवानां व्रजोयेन । रत्नप्रायः प्रबन्धोग्रन्थः काव्यसमयप्रदीपादिः तस्य, अन्यत्र रत्नप्रबन्धस्य विद्रुमादिमणि परम्परायाः प्रसूतिः । द्विजरोषस्य अगोचरः अविषयः सचनतथा अगस्तिकोपेन विषयीकृतत्वात् । अजडात्मा अनज्ञात्मा सचजडात्मा जलात्मा, डलयोश्लेपादावभेदव्यवहारात्, "यमकादौभवेदैक्यम्" इत्यादिना साहित्यदर्पणेतत्प्रतिपादनात् आदिपदेनश्लेषस्यसंग्रहः ॥

विलसदिति । विलसन्ती कार्तिलतायस्य तादृशोऽप्यविलसत्कीर्तिलत इति विरोधः, अविला निश्छिद्रा निर्दोषेतियावत् अतएव सती समीचीना,अवौ पृथिव्यांलसन्तीतिवा, कीर्तिलतायस्यसः। अथवा अवेर्नाथस्यस्वेष्टदेवस्य भगवतोलसन्ती कीर्त्तिलतापुसा दलता यत्रसः । अविर्नाथेरवावित्यादि कीर्तिः। समस्तमेदिनीपति मस्तकसरप्रसूनेति ।

समस्तमेदिनीपतिमस्तकानांसरप्रसूनानां माल्यकुसुमानां परागरागैः अरुणतमीकृतंचरणसरसिजंयस्य, पूर्वरूपालङ्कारः तथाभूतोऽपि राज्ञस्सेनाभिः विधूतः तिरस्कृत इतिविरोधः। राजसेन रजोगुणसम्बन्धिनाविकारेणअविधूतः अकम्पितइतिपरीहारः। विरोधाभासालङ्कारः श्लेषोपजीवकतयातेनसङ्कीर्णंद्वितीयश्चसरसं कीर्णः पूर्वरूपेणापीति ॥

प्रोज्ज्वलदनेकाग्निदीपितोऽपि शीतलतरः। कुलाचार निरतोपिकौलाचारविरतः। अगोत्रभिदपिवृद्धश्रवाः। संयातगौरवोऽपि द्विजराजाद्वेषणः। विश्रुतोऽपि सवहुश्रुतः। समग्रवैष्णवाग्रणीरपि गृहीतसमांसमीनः।

प्रोज्ज्वलदिति। प्रोज्ज्वलद्भिरनेकैरग्निभि दीपितोऽपि शीतलतर इति परमार्थस्तु 'अग्निभिः, दक्षिणाग्निगार्हपत्याग्न्याहवनीयाग्निभिः, दीपितः, तेषु हवनेन श्रेयसा प्रकाशमान इति ॥ कुलेति विरोधः स्फुटएव परमार्थस्तु कुलाचारे वंशाचारे ब्रह्माचारेवा, निरतोऽपि कौलाचाराद्द्विजातिभिन्नेविहितात् वामाचारात् विरतः "नकुलंकुलमित्याहुः कुलंब्रह्म सनातनम्" इत्यभिधानात् कौलाचारो यथातन्त्रे "वामे वामा रमण कुशलादक्षिणे मद्यपात्रम्, अग्रेन्यस्तं मरिचसहितं शूकरस्योष्णमांसम् स्कन्धेवीणा ललितसुभगा सद्गुरूणां प्रपञ्चः कौलोधर्मः परमगहनो योगिनामप्यगम्य,, इति। न च "सौत्रामण्यां कुलाचारो ब्राह्मणः प्रपिवेत्सुराम्" इति समयाचार तन्त्रे, "विनाहेतुकमास्वाद्यं क्षोभयुक्तोमहेश्वर। न पूजांमानसीं कुर्यान्नध्यानं न च चिन्तनम्। तस्माद्भुक्त्वा च पीत्वा च पूजयेत्परमेश्वरीम्" इति भावचूडामणितन्त्रे, "[illegible]"

इत्यादि कुलार्णवतन्त्रे प्रतिपादनात् द्विजन्मनामपितत्पाने नदोष इति वा-च्यम्, सौत्रामणियागस्य हरिनाथनिबंधादौ कलिवर्ज्येषु गणितत्वेनतदङ्गस्य सुरापानस्याप्रसक्तेः । वामाचारस्तु शूद्रपरएव तदुक्तं मेरुतन्त्रे "वामागमोमदुक्तोयं सर्वशूद्रपरः प्रिये, ब्राह्मणोमदिरादानाद्ब्राह्मण्येन वियुज्यते" इत्यादि । अगस्त्यसंहितायामपि सुरार्पणादिकमधिकृत्य "भूतप्रेतपिशाचास्ते भवन्तिब्रह्मराक्षसाः" इति । एवंवृहच्छ्रीक्रमसंहितायां "विप्रस्तु मद्यंमांसं न भक्षयेत्" इति । महाकालसंहितायाम् "सात्त्विकेनोपचारेण ब्राह्मणः पूजयेच्छिवाम्" इति । अतएव विजयापानमपि मद्यानुकल्पभूतं प्रतिषिद्धमेव द्विजन्मनाम् मुख्येऽधिकारिणएवानुकल्पेप्यधिकारात् । विप्रस्य मद्यग्रहण निषेधमभिधाय " मादकं सकलंवस्तु वर्जयेत्कनकादिकम् " इति भैरवतन्त्रे प्रतिपादनाच्च । किञ्च सुरापानं स्मृतौ महापातकेषु परिगणितम् तस्मात् स्मार्तसम्प्रदायाविरोधिनएवान्येऽपि स्ववचनाव्याहतार्थकाः सम्प्रदायाग्रहीतुं युज्यन्त इति दिङ्मात्रमिहानवसरे प्रदर्शितम्, विस्तरस्तु ताराभक्तिसुधार्णवे तन्त्रवेदाधिकारिनिर्णयेच विलोकनीयइत्युपरम्यते ॥

गोत्रं पर्वतं भिनत्तीतिगोत्रभित् इन्द्रः तद्भिन्नोऽपि वृद्धश्रवा इन्द्र इति विरोधः । अगोत्रभित् कुलाभेदकः, वृद्धेभ्यः शृणोतिइति वृद्धेषु वृद्धं वा श्रवोयशोयस्येति वा वृद्धश्रवाइति परीहारः । "गोत्रश्शैले गोत्रं कुलाख्ययोः" इति मेदिनी । श्रवोयशइत्यमरसुधा । गोत्रभिद्वज्री वृद्धश्रवास्सुनाशीरइत्यमरः । संयातं गौरवं वृहस्पतित्वं येनतथाभूतोऽपि द्विजराजस्य चन्द्रस्य अद्वेषेण इति विरोधः । परीहारे गौरवं महत्वंभक्तिर्वा, द्विजराजस्य द्विजक्षितिपतेः द्विजस्यराज्ञश्चेति वाऽर्थः । "गुरुर्निषेकादिकारे पित्रादौ सुरमन्त्रिणि, दुर्जरालघुनोः प्रोक्तो गुरुर्महतिवाच्यवत्" इति विश्वप्रकाशः । "गौरवं [illegible] भेदो ये संभ[illegible]रिष्यते"

इति शब्दशक्तिप्रकाशिका ॥ विगतं श्रुतं यस्यतादृशोऽपि बहुभिःश्रुतैस्तै-स्सहितइतिविरोधः। विश्रुतः ख्यातइति परीहारः। "वित्तविज्ञानविश्रुताः" इत्यमरः। गृहीतः आस्वादितः भक्षितइति यावत् समांसमीनः मांसेनसमं मीनो मांसं मीनश्चेति यावत् येन स इति विरोधः। गृहीता आत्ता समांस मीना प्रतिवत्सरं प्रसविनी गौर्येनेति परिहारः । "समांसमीना सा यैव प्रतिवर्षं प्रसूयते" इत्यमरः ॥

लोचनगोचरोनक्षिगतः। छन्दोऽनवस्थितः व्याप्त जगतीकः। आदिविद्वानिवानुशासिता शास्त्राणाम्। बादरायणइव उपदेष्टासत्पथानाम्। मूर्तिमानभिमान इव मानवानाम्। अवचनः परापवादप्रतिपादनेषु। अनयनोऽन्यकामिनीस्तनवदनदर्शनेषु। श्रोणोऽन्य-दीयद्रविणमोषणेषु। काश्मीरक्षेत्रंक्षमाकुङ्कुमप्रभवस्य। क्षीरनिधिः कारुण्यामृतस्य। निकषोपलोलब्धवर्णरत्न-स्य। प्रियपस्त्यंसत्यस्य। सौहित्यं साहित्यस्य।

लोचनेति। अनक्षिगतः लोचनागोचरइति विरोधः। अद्वेष्य इति परिहारः। अयंचविरोधाभासालङ्कारध्वनिः तद्वाचकपदाभावात्। "द्वेष्ये त्वक्षिगतः" इत्यमरः छन्दस्सु आर्यादिषु अनवस्थितः अवर्तमानः व्याप्ताजगती तदभिधानं छन्दोयेनेतिविरोधः। छन्दसा स्वैरवृत्त्याऽनवस्थितः किन्तु शास्त्राज्ञयाऽवस्थितः। जगती संसारः कीर्त्याव्याप्तोनेनेतिसमा-धानम्। छन्दोऽधिकृत्यस्वैराचाराभिलाषयोरिति विश्वाभिधानात्। "जगती भुवनेमायां छन्दोभेदेजनेऽपि च" इतिमेदिनी ॥ आदीति

आदौ सर्गादौ विद्वान् कपिलोमहामुनिः। यथा प्रलयात्परं जगदुद्दिधीर्षया विलुप्तानि प्राचीनशास्त्राणि कपिलोऽनुशासिता तथाऽसावपि। तदुक्तं "तत्त्व कौमुद्यां सर्गादावादिविद्वाननुभवन् कपिलोमहामुनिः प्रादुर्बभूवेतिस्मरन्तीति" ऐतेन परमकारुणिकतावस्त्वलङ्कारेणव्यज्यते। बादरायणोव्यासः। पूर्णोपमालङ्कारः। मानवानाम् मनुष्याणाम्। उत्प्रेक्षालङ्कारः सन्देहाभिमानत्वेन सम्भावनात्। अमुनैवसाभिमानतानराणामित्याशयः॥ अवचनः मूकः। श्रोणः पङ्गुः। "श्रोणः पङ्गौ" इत्यमरः। अन्यदीयस्यद्रविणस्य धनस्य, मोषणेषुचौर्येषु। उल्लेखालङ्कारः एकस्यैवानेकधोल्लेखात् "एकस्य बहुधोल्लेखादेकस्योल्लेखइष्यते। गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मश्शरासने" इति कुवलयानन्दकारिकोक्तेः। क्षमैवकुङ्कुमंतत्प्रभवस्य तदुत्पत्तेः काश्मीरक्षेत्रम् काश्मीरदेशीयकेदारम्। परम्परितरूपकमलङ्कारः। तेनक्षमैकनिकेतनत्वं व्यङ्ग्यम् काश्मीरादन्यत्र तदनुत्पादात्। कारुण्येति कारुण्यं करुणातदेवामृतं तस्येत्यर्थः। व्यङ्ग्यन्तुपूर्ववद्बोध्यम्। निकषोपलः परीक्षाप्रस्तरः। लब्धवर्णो विद्वान् तदेवरत्नं तस्य, रत्नं लब्धवर्णमपि साधुत्वज्ञानायनिकषोपलेपरीक्ष्यतेजनैरिति। पण्डितराजत्वं व्यङ्ग्यम्। पस्त्यम् गृहम्। तदपिनसामान्य मपितु प्रियम्। "निशान्तपस्त्यसदनम्" इत्यमरः। सौहित्यं तृप्तिः तत्कारकइत्याशयः। हेत्वलङ्कारः हेतुभूतस्य गोविन्दस्य हेतुमतासौहित्येन सामानाधिकरण्यवर्णनात्। "हेतोर्हेतुमतासार्धं वर्णनं हेतुरुच्यते" इत्युक्तेः॥

उद्धारकारकः स्थविरग्रन्थानाम्। बालसुहृच्छन्द तन्त्राणाम्। सीमान्तगन्ताकलाग्रामाणाम्। आकरो विवेक रमणीयमणीनाम्। मुग्धस्मितचन्द्रिकास्यवदातीकृत

**कुन्दकुसुममालायमानरदनच्छवि विच्छुरितवदन-विनिर्यन्मधुरिमधुरीणाग्राम्यमसृणाव्यलीकवचनाधरीभूतै धितसुधाभिमानो गोविन्दोनाम मिथिलायाम् ।**

स्थविरः, प्राचीनः शब्दतन्त्रम् व्याकरणम् । बहुवचनेनानेकव्याकरणाभिज्ञत्वं गम्यते । शैशवएवव्याकरणानां परिशीलनाद्बालसुहृद्भावः । कलाग्रामः कलासमूहः । "ग्रामः स्वरेसंवसथे वृन्दे शब्दादिपूर्वकः " इति विश्वः । सीमान्तगन्ता अन्तपर्यन्तस्याभिज्ञाता । अन्योपि ग्रामसीमान्तं गच्छतीति । आकरः खनिः विवेकएवरमणीयोमणिस्तेषाम् । उक्तरूपकमलङ्कारः । मुग्धंस्मितरूपयाचन्द्रिकया ऽत्यवदातीकृतस्य कुन्दकुसुममालासदृशस्य रदनस्य दन्तस्यच्छविभिः विच्छुरितात् व्याप्तात् वदनात् विनिर्यद्भिर्निर्गच्छद्भिः मधुरिमधुरीणैः मधुरपदार्थाग्रेसरैः अग्राम्यै र्मसृणैः कोमलैः अव्यलीकैः सत्यैः वचनैरधरीभूतैः एधितः प्रवृद्धः सुधाया अमृतस्य अभिमानोयेन स तथोक्तः । स्मितचन्द्रिकेत्यत्ररूपकम् अत्यवदातीकृतेत्यत्रपूर्वरूपम् । मालायमानेत्यत्रोपमा अधरीभूतेत्यत्र व्यतिरेको ऽलङ्कारः । पूर्वरूपाधिकरूपमासौ पूर्वरूपम् अप्पय्यदीक्षितेनप्रतिपादितम् तन्निदर्शनं यथा 'नीलोत्पलानिदधतेकटाक्षैरतिनीलताम् " इति ॥

**इति गभर्नमेन्ट संस्कृतपाठशालाध्यापक मैथिल श्रोत्रिय श्री बालकृष्ण मिश्र विरचितासूक्ष्मार्थ विवेचिका टीका समाप्ता ।**

---

## ( इदमवश्यं विलोकनीयम् )

स्वैरवृत्त्याऽभिमतार्थवार्यस्योपपादकाखिलस्थलस्य व्याख्यानं प्रचुरसमयसापेक्षमित्यन्तराले वलवदन्तरायोपनिपपातं शङ्कमानया सत्वरयाच श्रीश्रीमत्या लक्ष्मीश्वरीदेव्या महाराज्ञा अनतिवार्ययाऽऽज्ञयाऽस्थानएव सूक्ष्मार्थ विवेचिका टीका मया समापिता । अतः परं विषमेषु स्थलेषु टिप्पणी [illegible] विधास्यते, [illegible] विवेचयिष्यत इति सखेदं नवकाव्याकोकलालसमानसो निवेदयन् विरमति बालकृष्णः ।

याचैतदेव सकलेऽवनितले श्रेयः पदमिति द्योतनाय-विहितयाऽश्यामसीमयेव विप्रतिपत्तिव्युदसनसमर्थया बृहद्वनं[1] चतुष्टयेन परिवेष्टिता । हरितां काननानिधावतोऽध्वर धाममधूमस्यकैतवेन परिहृतेव[2] विभ्यता कलिना । मलयशिलोच्चया वयवैरिव शङ्कर[3]कान्ता[4]श्रितैः, सैन्दूरकौतुकै रिवतप[5]स्यावधि मधिगतैः, निदाघसमयैरिवावश्या[6]यजाड्य[7]रहितैः, पार्थिव प्रमथनाथ पूजनैरिव प्रथमार्चितकृतमुखैः, दर्शन प्रबन्धैरिव विचक्षणकृतलक्षण प्रतीक्ष्यैः, सदयहृदयैः सहृदयैः, सदाश्रवै[8] र्वृजि[9]नैर्जनैराकीर्णा । गिरिजेवराज[10]सिंहाधिष्ठिता, प्रोषित पतिकेव तपः[11]क्लेशातिकृशघनलतरोपचै[12]रितविप्रयुक्ता[13], सुरपुरीव नासत्या[14]न्विता, त्रिकूटशिखरभूमिरिव समिति[15]नैपुण्या वलम्बिताऽगण्यपुण्यै[16]जननिषेविता, निःकुटस्थलेव सुमनो[17] बन्धु[18]जीवक प्रियका[19]पराजितो[20]द्भासिता, नृपविलासिनीकेलिसरसीव विविधतीर्था[21]वलीवलिता, सुप्रसाधितगौरयुवति विग्रहैरिव बहुधवलै[22]कुचस्थलकमलातिसुरभितैः, प्रौढवधूवक्षोजैरिव विभासित[23]मालैः, असतीजनैरिव कमनीय[23]वयोऽनुरञ्जित पल्लव[24]गणैः, प्रावृट्कालैरिव घन[25]श्यामलता मनोहरैः, ।

---

१ वनंजलमरण्यञ्च । २ परिहृतेवेति । इयंतुसापह्नवोत्पेक्षा । ३ शङ्करः चन्दनपादपः । ४ कान्तः प्रियङ्गुः, शङ्करकान्तस्सर्पश्च । शङ्करकान्ता-पार्वती । ५ तपस्यातपः, तपस्यः फाल्गुनः । ६ अवश्यायोगर्वस्तुषा-

रश्च, ७ जाड्यमज्ञता शिशिरता च। ८ सदाश्रवैः सतांवचनेस्थितैः सत्प्रतिज्ञैश्च। ९ अहृजिनैर्निःपापै रकुटिलैश्च। १० राजसिंहः सिंहइव राजा सिंहानांराजाच। ११ तपः तपस्या शिशिरश्च, १२ उपचरितः पूजितः, कृतशैत्याद्युपचाराच। १३ विप्रयुक्ता विप्रेणयुक्ता वियोगिताच। १४ नासत्यान्विता न असत्यान्विता, नासत्याभ्यामाश्विनेयाभ्यामन्विता च। १५ समितिस्सभायुद्धञ्च, १६ पुण्यजनः पुण्यात्मा राक्षसश्च। १७ सुमना मालती शोभनमनाश्च, १८ बन्धुजीवकः बन्धुरक्षकः बन्धूकश्च १९ प्रियकः प्रियः कदम्बश्च, । २० अपराजितः नपराजितः, अपराजितातदभिधानं प्रसूनं च। २१ तीर्थः पुण्यस्थानं घट्टश्च। २२ घनः कुचः स्थलकमलं तत्तन्नामधेयोवृक्षविशेषः अतिसुरभितः अतिमनोज्ञः। बहुधवलाकुचस्थलस्यकमलाशोभायत्रसः, अतिसुरभितः अतिसुगन्धान्वितश्च। २३ विभासीतमालस्तदभिधानस्तरुर्यत्र, विशिष्टयाभयादीप्त्या सितामालायत्रेतिच। २४ वयो विहगः अवस्थाच, २४ पल्लवः किसलयो विटञ्च। २५ घनयासान्द्रया श्यामया लतया घनस्य मेघस्य श्यामलतया श्यामलया च ।

वृत्तनिबन्धैरिव हीर[२६]घटित कुण्डलिकामणि मौक्तिक मालेन्दु वदनावभासित सुन्दरीगीयमान हरिगीतमन्दा[२७]क्रान्तैः, वैरोचनिभवनैरिव अनेकाशोक[२८]पलाश[२९]काञ्चन[३०]माला[३१]रोचिरञ्चितैः, मन्दंकदाचिदमन्दमान्दोलितातिहृद्यहिन्दोल क्रीडासंविधानवेल्लितै[३२] र्वहुमानचित्रित[३३] चीनैर्निचोल[३४] रुचिरञ्चिताभिः, वसनवदनकान्त्या शातक्रतवकार्मुकसौदामनीप्रभाविभ्रम मावहन्तीभिः पुरुषायित सुरतकेलिम-

भ्यस्यन्तीभिरिव दोलाकुतूहलकला कुशलतावलोकन सं-
जात प्रसादवनदेवता वितीर्णमौक्तिक फलवर्षणैरिव निम्नो
न्नयनश्रमखेदोन्मिषत्स्वेद कणिकाकलापैर्व्याप्त प्रतिप्रती
काभिः दृशानवयौवनेनत्रिजगतीं तृणायमन्यमानाभिर्वि-
लासिनीभिरुपशोभितैः, अविरतविसा[३४]रविवर्तनोच्छलच्छी
करनिकररुचिराभिः, चक्रवर्तिस्थितिभिरिव कुवलै[३६]यासीन
पक्षिभिः वेशँ[३७]वीथीभिरिवेतस्ततो भ्राम्यमाणमँ[३८]धुपावलीभिः
सरसीभिर्विभासितैः, अनारतमधुलुब्धगन्धवाह धूतानून
प्रसूनै रुपवनैः प्रियदर्शना। यत्रसदेहाअपि श्रयन्ति[३९] विदे
हताम्, कलहंसाअपि नाकलयन्ति कँ[४०]लहंसताम्, कुशासँन
समासीनाअपि नपश्यन्तिकुशासनम्, मंक्षुँक्षीणाक्षिपँक्षनि
क्षिप्ताअपि साक्षात्कुर्वन्तिकिँमपिरूपम्,

२६ हीरकं वज्रं छन्दश्च एवमग्रेऽपि । २६ मन्दाक्रान्ता छन्दः, मन्दमाक्रान्तं गमनं यत्रेतिच । २७ वैरोचनिर्वलिनृपतिः, । २८ अशोकोवृक्षः शोकरहितश्च पलाशं पत्रं पलाशोमांसभक्षकश्च, । ३० काञ्चनं काञ्चनारपादपः सुवर्णञ्च, ३१ माला समुदायः स्रक्च । ३२ वेल्लितं स्मितम्, ३३ बहुमानम् बहुमूल्यकम् । ३४ चीननि चोळं चीनदेशेभवं वसनम् तच्च सूक्ष्मं भवति । ३५ विसारो मीनः । ३६ कुव-लयम् अवनिमण्डलम्, कमलञ्च, ३७ पक्षी विहगो मित्रंच । ३७ वेश-वीथी वेश्यागृहसम्बन्धिनीरथ्या, ३८ मधुपोभ्रमरोमद्यपोलम्पटश्च । अथ विरोधा भासेनवर्णयति यत्रेत्यादि । ३९ विदेहता शरीर राहित्यम् जीव-न्मुक्तिश्च आकलयन्ति प्राप्नुवन्ति पश्यन्तिच । ४० कलहंसता कल

सस्यभावः सतांकलहश्च । ४१ कुशासनम् कौपृथिव्यां शासनं कुशस्यासनं कुत्सितं शासनञ्च । ४२ मंक्षु सपदि, ४३ अक्षिनेत्रम् अक्षीकलिः, ४४ किमपि रूपंकोपि गुणविशेषः भागवतं स्वरूपंच ।

सुरभिसमयेष्याषाढ विलसितम्, अधरतोऽपि द्विजानाममृतावापनम् याञ्चरत्न सानुमिवनजहातिजात्वपिसुवर्णता, यदवनीं स्पृष्टवती सुरापगापिपावयति प्राणिसामान्यानि, यदीय विश्वम्भरातोऽवततारााद्यशक्तिरूपा विदेहनन्दिनी, यत्राश्रितकुवेरोदवसितवशीकृतचारुतोर्वशी प्रभृतिविलासिनी त्रपाकारि सौन्दर्य शालिनीनां नीलनलिननिभाः कालिन्दीकल्लोल कुटिलकटाक्ष च्छटाः सुतनुश्रितकामिनीनां व्यपनयन्ति तनु वा णतांपञ्चवाणस्य, विमुग्धमुग्धाङ्गनापाङ्ग भङ्गयइवकृतयः कवीनां प्रसह्यहृदयं प्रविशन्तियमिनोऽपि, यत्रच व्यसनं शास्त्रेषु नदुरोदरादिक्रीड़ासु, हृदयग्रहण मग्निषोमीयपशूनां, नपराङ्गनानाम्, वादिप्रतिवादिभावो विचारेषु नव्यवहारेषु, कर्कशता प्रत्यग्रवधूवक्षोजेषुनान्तः करणेषु, मार्गण ताकार्मुकेषु, अधीरतापिप्पलदलेषु, विपदाकलन मुपवनेषु अपचीयमानता युवतिमध्यभागेषु नलोकेषु, अश्रुप्रवृत्तिर्भंग वद्गुणाकर्णनेन, नशोकेन, श्रुतीनामाक्रमणं सुन्दरीलोचनैः, नपाषण्डदुर्वादैः, सारसतासरसीरुहेषु नजनतासु, स्नेहविच्छेदो वैभातिकदीपभाजनेषु नदम्पतिमानसेषु, तर्कशास्त्रेजातिसङ्करः, सुरतेषु अधरपीतिः, नापि गोत्रस्खलनम् ।

सुरभिर्वसन्तोयोपिच, समयः कालआचारश्च, आषाढोमासोव्रतिनां दण्डश्च। अधरतः नीचात् अधरौष्ठतश्च। द्विजानां विप्राणां रदानांच। अमृतं मुक्तिः सुधाच, सुरापं गच्छति या सा सुरापगा मद्यपगामिनी सुराणामापगानदीगङ्गाच। सुवर्णताकनकत्वं शोभनचातुर्वर्ण्यतासुरूपताच। उद्वसितंगृहम्, तनुः, स्तोकः। मैथिलीपूर्वशचीप्रभृत्यपेक्षयासौन्दर्येणसुतनुपतित्वे नच व्यतिरेकः, तासांकटाक्षामदनशररूपाभवन्तीतिप्रौढोक्त्य रूपकध्वनिः। विमुग्धा विशेषेणसुन्दरी। दुरोदरं द्यूतम्। शाब्दपरिसंख्यालङ्कारः। ग्रहणमवदानाय। विचारोन्यायप्रयोगः। मार्गणतावाणत्वं याचकत्वं च। सन्तोपातिशयः समृद्ध्यतिशयोवाध्वनिरितितस्यसन्देहसङ्करः। अधीरता चाञ्चल्यमप्राज्ञत्वंच। विपत्पक्षिपदम् आपत्तिश्च। आकर्णनेनेति तथाच भक्त्यतिशयोव्यङ्ग्यः। श्रुतीनां कर्णानां वेदानाञ्च। सारसता सरसीरुहत्वम् अलसजनवत्वं च। रलयोरभेदात्। स्नेहःतैलं प्रेमाच। जाति सङ्करः परस्परात्यन्ताभावसमानाधिकरणयोरेकत्रसमावेशोजातित्ववाधकेष्वन्यतमः, विजातीयवर्णजातत्वंच। एवञ्चनलोकेषु इतिअर्थतः प्रतीयते अतः आर्थपरिसङ्ख्यालङ्कारः। अधरोऽधरौष्ठोनीचश्च। नान्यदेतिआर्थः एव मग्रेऽपि। प्रावृषि वर्षासमये गोत्रस्खलनम् हृदयस्थितयोरन्यनायकयोर्नाम स्खलनम् मार्गेस्खलनं च।

वालिशतायामसद्भावः, अपवर्गयोर्लोभः, प्रतिपादनेऽसन्तोषः, वृषविदूषके द्वेषः। यस्यांचक्वचिदाम्नायक्रियाकलापेषु(१), क्वचिदीशाननवानुमानेषु(२),

१ अयं विचारोवेदस्य। २ न्यायस्य। १२

क्वचित् पीलुपाकप्रक्रियासु(१), क्वचित् श्रुतेरपौरुषेयतायाम्(२), क्वचिद्दृष्टिसृष्टिवादे(३), क्वचित् सत्कार्यसंस्थापने (४), क्वचिन्निर्विकल्पसमाधौ[५], क्वचिद्रसध्वन्यलङ्कारकवनेषु(६), क्वचिन्नागेशोक्ति प्रदीपोद्योतेषु(७), क्वचित् ग्रहगणगणितेषु ( ८ ) क्वचित्कुण्डमण्डली निर्माणेषु, ( ९ ) क्वचित्पञ्ची प्रवन्धेषु [१०] विचारोजनानाम् ।

क्वचिद्धु द्धीय विधानमनुसेव्य केचित् भूतिभूषितभालाद्यवयवाच्छतराक्षुद्ररुद्राक्षच्छायाविच्छुरितविग्रहा शिवलिङ्गंस्नपयन्ति परमपूतघनसारघनचन्दन शिशिर सलिलैः, क्वचिन्मार्तण्डमण्डलव्यस्तलोचना मनागप्यस्पन्दमानापघना अनाकलितरदना ध्यानं दधाना एकचरणाङ्गुष्ठस्पृष्टकुशासनाश्चित्रार्पिता इव केचित् प्रजपन्तिगायत्रीं निखिलागमैकावलम्बनीम्, क्वचित् वहुमान्यमन्येन्यासं विन्यस्यन्ति,। क्वचिद्ब्रह्मपरायण पुराणानि केचिद्वाचयन्ति, क्वचित्स्वाहाकारैः क्वचित्स्वधाकारैः क्वचिच्च वषट्कारैः केचिद्गगनवलयं वाचालयन्ति, किं वहुना, येन च कामपि

---

१ काणाददर्शनस्य। २ मीमांसायाः। ३ वेदान्तस्य। ४ सांख्यस्य। ५ योगस्य। ६ साहित्यस्य। ७ व्याकरणस्य। ८ ज्यौतिषस्य। ९ तन्त्रस्य। १० पंचीशास्त्रस्य।

एतेनसकलशास्त्राभिज्ञजनत्वं व्यज्यते।

सुषमां सुखं विलोकमानास्तत्र जनाःस्पृहयन्तिनामर पुरायाऽपि ॥

बालिशता अज्ञता । असद्भावः असाधुता अनस्तित्वंच । नतुजनेषुसः । अपवर्गयोः परापरमुक्त्योः, नतुधनेसः । प्रतिपादने दाने ज्ञानेच, नतुतत्र । वृषविदूषके धर्म्मविरोधिनि, नतुसाधौ 'आम्नायोवेदः, ईशानः शिवः । नवानुमानेषुनवसंख्याकेषुनूतनेषुचतेषु पीलुः परमाणुः, दृष्टौसत्यांसृष्टिःदृष्टि सृष्टिस्तस्यावादः एतदेवपरमरहस्यंवेदान्तस्य, सत् नित्यम्, निर्विकल्पः असम्प्रज्ञातः, नागेशः शेषः, घनसारः कर्पूरम्, अपघनोऽवयवः, न्यासम् मातृकादिक्रमागमोक्तम्, सुषमापरमाशोभा । इति मिथिला वर्णनम् ॥

योऽनुवासरमवसरेहरेः पूजनस्याधिमहारजनभाजन कलङ्कविकल कलकलाधर विमल सकलहरिद्विसृत्वरपरिमलमेदुर हरिचन्दनद्रवं परेणपात्रेणापिधायाध्यात्महृग्ध्यातवेदव्रातविन्दु वृन्दारकवृन्दवृन्दारक पुरन्दरोपहृत मन्दमन्द स्यन्दि सुन्दर मकरन्द विन्दुमन्दिरोपगुञ्ज दिन्दि न्दिर पुञ्जमञ्जुमन्दारमरन्दा निन्दि ति रोहित वृन्दारिकादिवन्दारुत्रिजगदिन्दिरावन्दित शारदारविन्द श्रीमन्मुकुंदचरणद्वन्द्वलाञ्छनं निःपक्ष्मस्पन्दं स्वच्छन्द मौपम्यक्षेत्रीकृत शरदाशतच्छदेनाक्षियुग्मेन क्षिप्तरपात्रेऽतिक्षितिक्षणं तत्रसंवीक्ष्य क्षपितानूनकाक्षेपपक्षेणतया आत्मक्षोमतामुपेयुषा यो-

गिच्छत्रलक्षेणप्रतनुविटपिनेव जटापटलान्वितेन पाटीरद्रुमेणेव नागनिर्मोकधवलीकृतकलेवरेण निवातप्रदीपेनेवनिश्चलेन, विधिनेवपद्मासनस्थायिना, हरेणेव निगृहीत विषयिणाऽपि दुरासदं परमतमानन्दसन्दोहकन्दलं विन्दन् चिरमर्चनमचर्चिकांचकार। यस्याभ्याशमासाद्यापश्यन्तश्शरणान्तरंवनदहनतुलिततापत्रितयात्यन्तिकोपशमननिदानोत्कलिकाकलापाकुल विकलमानसाः कलिकलांकलयतो विततानुभावां प्रहीणवैष्णवमनुप्रादेशनस्यानुक्रोशेन सरहस्याधिगम्यागमीयदीक्षामञ्जसा समानयन्नात्मनःस्पृहणीयसिद्धिसमृद्धि शालितां वादविजितसभाजन सभावजनता हितसभाजन सभाजनगमिथिलाभिजनाः पुरातनाः। सविधवर्तिनिच यदीयवदने प्राद्रवन् चन्द्रकान्तदृषदोऽपि। यञ्च स्वकीयरामणीयक प्रवणीभूतां नाकामयन्निकामं स्पृहयन्तीमपि परकामिनीम्।

महारजनं सुवर्णम्, मेदुरः सान्द्रः। विन्दुः ज्ञाता,। वृन्दारकोदेवः मुख्यश्च। इन्दिन्दिरः भ्रमरः, मन्दारः पारिजातः, मरन्दः पुष्परसः, शरदा शरत्समयः। अतिक्षिति, क्षितिमति क्रान्तम्,। क्षण उत्सवः,छत्रंश्रेष्ठम्, प्रतनुः विपुलः। जटा,लग्नकचः। शिफाच, पद्मासन मासनविशेषः पद्मात्मकमासनञ्च, विषयि इन्द्रियम्। विषयीकामश्च। कन्दलंमुलम्, अर्चनमचर्चिका प्रशस्तपूजनम्। मनुः मन्त्रः। प्रादेशनं दानम्, अनुक्रोशोदया, अ-

ज्ञसा शीघ्रम्, सभाजनः सभायास्सदसोजनः सभाजनंसपर्या, भाजनं पात्रम्, सभाजननं सह भायाः दीप्ते जननेन, अभिजनोदेशः, वदन इति प्रौढोक्त्या रूपकालङ्कारध्वनिः ।

अथासौकदाचिदतिविस्तारविकशलदुःपार संसार कान्तारस्फुरत्स्फारसार सपरिवार मारप्रवेकनैकप्रकार-साभिहारसञ्चार श्वापदवारकवलितारालजङ्घाल नि-श्वास प्रासविषय महाशीविषग्रासजासोढप्रौढतर कालकूटज्वालाजालजटाल जीवजातपरीतापकलापा-त्यन्तिकनिवर्तनैकसाधनदर्शनम्, नैदाघदिवसाव-सानजायमानपावमानापदिशलसद्धनघटामेव क-च्छटां वैभवाश्रितां[1]पि मूर्तिमादधानम्, कलुषे सशेष मिव निस्तललोचनम्, करचरणयोरथनासादनेनत्या-गयोग्यतामुपदिशन्तमिवकैवल्यपरिपन्थिभूतादानक-र्माशेषविषयेषु, चक्रेणापिदण्डाकृतिमुपेयुषा सुदर्शनेन प्रोद्भासितम्, कृतात्मानमिवसुभद्रान्वितम्, अन्तःस्थि तजगन्निवासतयाऽवधीरितगिरिगणाग्रगणनीयगौरवे, नवकामिनीमानइव प्रोन्नतमेघनादपरिगोपिते, महा गहनइव मातङ्गतुङ्गमकेशरिसुरक्षिते, कनकाचलइव वैकुण्ठाधिष्ठितोत्तरप्रदेशे, अनङ्गेनापिभीमेन, प्रत्या-ख्यात सुगतेनापि सुगतशालिना, निर्मापिते, क्रतु

१ "जगदाधारतया" इति वा पाठः ।

मण्डपइव द्वारचतुष्टयमण्डिते, नागरतरुणतल्पइव स्निग्धसुप्रसाधितस्फीताङ्गने, मन्दिरे, पृथक्प्रकारै-श्चित्रोपचारैरहर्निश

स्फारं, वहुलम्, सारोवलम्, मवेकः प्रधानम्, साभिहारः अभिगम्याक्रमणेनसहितम्,। वारः, समुदयः, अरालः कुटिल। जङ्गालः अतिवेगवान्, प्रासः स्थितिः। जटालोव्याप्तः। दर्शनमिति, निः श्रेयससाधनसाक्षात्कारविषयइतिपर्यवसितार्थः । पावमानापदिशम् वायव्यकोणः, वैभवं व्यापकत्वम्, मूर्तिरपकृष्टपरिमाणं, शरीरंच, निस्तलंवर्तुलम्, उत्प्रेक्षा । चक्रेणापीति प्रभावातिशयोविरोधपरीहारेहेतुः । कृतात्मा, पुण्यात्मा, सुभद्रान्वितम्, सुभद्रयादेव्या शोभनेनकल्याणेनवा अन्वितं युक्तम्, । मेघनादेन तन्नामधेयया प्रशस्तभित्तिकया मेघस्यशब्देनच, । परिगोपितेरक्षितेऽपस्तुते । मातङ्गादयः गजादिमूर्तयः गजादयश्च, सुरक्षितम् शोभितमर्चितंच, वैकुण्ठण्ठस्तदभिधानः प्रासादो हरिस्तस्यालयश्च ,अनङ्गेनातिभीमेन अङ्गरहितेनापिभयानकेन, अनङ्गभीमेनराज्ञाच । सुगतोवुद्धः, शोभनज्ञानम् । स्निग्धसुप्रसाधिस्फीचित्ताङ्गने स्निग्धं सलिलेनसिक्तम्, अन्यत्रस्निग्धा प्रणयिनी, सुप्रसाधितम् अलङ्कृतम्, अन्यत्र:मीता, अङ्गनम् प्राङ्गणम्, अन्यत्र अङ्गना स्त्री यत्र तस्मिन्निति ।

मर्च्यमानम्, वसन्तकालइव शालग्रामलक्षलक्षिते, त्रिदिवकासारइव काञ्चनकमलाञ्चिते, वाणतनुजाख्यानकइव मदनमोहनेन विराजमाने रत्नवेदिपीठे, प्रष्ठितम्, राजभवनमिवनमहाशनाभिषेचितम्, प्रावृषे-

ण्यकाननमिवनीलाचलावस्थितम्, अमरपुरमिवस्थे-
मानमिव विमलामन्नम्, काव्यानन्दमिव सरस्वदसदे
शातिरिच्यमानम्, श्रुतिशत विलसितम्, अपरिणा-
मिनमपि प्रधानरूपम्, अयाजकमपिदक्षिणाशाश्रितम्,
सङ्कर्षणसनाथमथनाथं जगन्नाथं विलोकयितुकामो
गमनायचेतश्चकार । ततोऽधिगतमात्रैतद्वृत्तान्तेषु
सहजस्नेहसलिलोत्पीड़पूरितहृदयेष्वात्मीयजनेषुकेन-
चित् वत्सनतत्रगमेलिमम्, मृदुलतमातेप्रकृतिः,
तनुरपिनजहाति सर्वथाशैशवदशाम्, दवीयसीच
पदवीजगन्नाथदेवस्येति, केनचित् आयुष्मन् अति-
दुर्गमासाऽसरणिः, सन्निहितत्रभीषणानि विपिनानि,
बहुलाश्च शिलोच्चयाः, प्रचुराश्च तरङ्गिण्यः, तस्मा-
दपनयमनोगमनादिति, केनचित् प्रियकथयकथमि-
वाहं त्वयाविना अहहतिष्ठामि, हाकथंवा समयंनया-
मि, अहोकंवासमालपामि, हन्तहन्त कस्यवाहृदयम-
र्पयामि, शिवशिवकस्यवाक्लेशंकथयामि, कोमेवतमा-
नसं प्रमोदयति, कागतिः किंशरणम्, कउपायः, ततो
नार्हसिइतोयातु मित्यनेकधा समस्तैरेवतैस्साश्रुलोचनं
प्रतिषिध्यमानोऽपिवलवताप्रवणितमिव, गृहीतमिव,
समाकृष्टमिव, स्वान्त

ग्रामग्रामः तदभिधाहरिधिका पुष्पसमुदायश्च, कथिते युक्ते । का-

ञ्चनकमलाञ्चिते काञ्चनेनकमलया लक्ष्म्याकमलेनचाञ्चिते । वाणतनुजा, उषा, मदनमोहनोदेवः पित्तलविग्रहः, मदनस्य अनिरुद्धस्य मोहनं चित्रलेखावचनप्रपञ्चश्च, प्रमदा जगन्नाथदासी युवतिश्च, तस्याःशतैः निषेवितम् । प्रावृषेण्यम् प्रावृषिवर्षासमयेभवम्, नीलाचलावस्थितम् नीलाचलः नीलपर्वतनामधेयोगिरिःअन्यत्रनीलाचला श्यामावनी, तत्रावस्थितम् । विमलासनम् विमलादेव्याः । परत्र विमलस्य निःपापस्यासनम्, " विमलाभैरवीतत्रजगन्नाथस्तुभैरवः " इत्यागमाभिधानम् । सरस्वान् समुद्रः सरसश्च, अग्रदेशातिरिच्यमानम् अन्तिकमितियावत् । श्रुतिशतविलसितम् श्रुतिशतं वेदशतंच, तेनतत्रवा विलसितम् । प्रधानं प्रकृति मुख्यञ्च । दक्षिणाशादक्षिणाया द्रव्यरूपाया स्तृष्णा, दक्षिणा दिशाच । सङ्कर्षणोवलदेवः । सनाथः नाथसहितः युक्तश्च, अनाथोनाथरहितोऽनपकृष्टश्च । उदन्तोवृत्तम् । तिष्ठामीत्यादौसर्वत्रवर्तमानसामीप्येलट् ॥

मसौनिवर्तयितुंनैवप्राभवत् । अनन्तरं चादसीयामवसायातिभूमि मुत्कलिकां कथंकथमपितैरनुज्ञातगमनोऽनुकूलचन्द्रतारकेन्द्राधिष्ठितोच्चस्थशुभग्रहसमुदयेचरलग्नावलग्नेशोभनवासरे प्रयाणाय विशेषेणभगवतःपर्याततानसपर्यां पर्यायेण, जजापचेष्टमनुम्, पपाठचभूयांसिस्तोत्राणि, जुहावचदक्षिणाश्रितशिखं संस्कृतेजातवेदसिहविश्शान्तिमन्त्रैः, विदधौचान्यान्यपिकल्याणोदर्काणिकर्माणि, ततः प्रवर्धितोराशिभिराशिषां गुरुभिरभिवादितैः, अभिनन्दितस्समाजैस्सामाजिकानाम्, साश्रुधारं समालिङ्गितोवयस्यैः,

प्रणमन् नारायणपदाम्बुजम्, अनुचिन्तयन् नलवैन्य-भरतहैहयनृपान्, उच्चारयन् समुचितानिमन्त्राणि, विलोकयन् शकुनकुलानि, गहनपादपङ्क्तिप्रत्यादिष्ट-पतङ्गपादः पादपाथोजेनपावयन् पृथिवीं प्रतस्थे द्वितीयो विधेयेन, निवर्तयांचकारच प्रेमपरवशतया स्वैकविन्यस्तबाष्पसम्पाताकुललोचनाननुयायिनोज-नानुपायेनकेनापि । अथन्नजन्ननेकनैवृतव्रजान् कल-यन् कौतुकेन, अवलोकयन् नानाविधान्यद्भुतानि, निशमयन् नैकभिदभारतीं, परिशीलयन् तीर्थसंहतिं, प्रतिपालयन् नित्यनैमित्तिकानिकृत्यानि, अप्रतिपत्ति मानयन् पश्यतांकदम्बकानि, प्रौढवनितामपिप्रापयन् मुग्धतां, परिणमयन्, पुण्यानि प्रेक्षकप्राणिनां, संजा-तशातजातः स्मरणीयतामुपग

अदसीयाम् अमुष्येमाम् । अनुपायविज्ञाय, अतिभूमिम् मर्यादाम-तिक्रान्ताम् । केन्द्राः प्रथमचतुर्थसप्तमदशमस्थानानि, उच्चस्थ उच्चस्थाने-स्थितः तच्च "मेषे रविर्वृषेचन्द्रोमकरेचमहीसुतः" इत्यादिनाज्योतिषेप्रति-पादितम् । शुभग्रहाः चन्द्रबुधगुरुशुक्राः, चरलग्नस्य, मेषकर्कतुलान्यतमस्या वलग्नमध्ये, सपर्याम् पूजाम्, पर्यायेणक्रमेण, मनुम् मन्त्रम्, दक्षिणाश्रित-शिखं दक्षिणदिशमाश्रिताशिखायस्मात्तदितिक्रियाविशेषणम्, जातवेदस्य ग्नौ, उदर्कविम्बा फलम् । गहनंवनम्, पतङ्गपादः रविकिरणः विहगचरण-श्च, छत्ररहितइतिभावः । पावयन्निति, उपानद्भ्यां रहितइत्याशयः । तथा-चधार्मिकताविशयोऽव्यज्यते, विधेयोभृत्यः । नैवृतव्रजान् देशसमूहान् नै-

कश्चिदा बहुप्रकारा, अप्रतिपत्तिर्जड़ता, मुग्धता नवयौवनत्वं मोहवत्त्वंच, विशेषणद्वयेन अद्भुतसौन्दर्यातिशयोऽव्यङ्ग्यः, शातजातम् सुखसंहतिः, स्मरणीयतामुपगतेषु व्यतीतेषु । पर्यायोक्तमलङ्कृतिः ॥

तेषु वासरेषु नातिदूरेऽतिमेदुरपृथुलसालप्रभृति विटपिनां पटलैर्नभस्वतान्दोलितेन मूर्ध्ना निवारयद्भिरिवदवीय सामपि पथिकानामागतानि, सुपर्णतयोचितहरिविलसितैः, लक्ष्यतया निपतितपतत्रिभिः, रविरथपथं प्रतिरोद्धुमभिलषद्भिरिव कौतूहलेन, वारणमदवारण प्रसवजाम्ववानोकह निवह दीर्घताभिमानं तिरस्कुर्वाणैः परिवृताम्, शिखरिविस्तारितशिखण्डशिखिगणमयूखजनिताशेष सुषमाम्, राजसम्पदमिव प्रभूत कनकखर्जुरावर्जिताम्, सत्पुरुष क्रियामिव 'दर्शित वंशोन्नतिम्, प्रावृषमिव घनाघनघनगर्जिताम्, सम्परायक्रियामिवस्वच्छन्द खड्गवर्गाम्, केशवकराकृतिमिव सारङ्गसङ्गताम्, भारतकथामिव भीम सत्त्वकृत पराक्रमां कीचकविलसितां सकौरवाञ्च, राजरमणीमिव सहचरी शतसेवितां नवप्रवालरुचिरां प्रोद्गतमदनांच, मानवविवर्जितामपि पुंनागनिषेविताम्, अनलकामपिरम्भासम्भाविताम्, नेत्रविकलामपिसनेत्राम्, कुष्ठाश्रितामपि वेदनानभिज्ञाम्, वाहिनीरहितामप्यनेकयामिनीम्, क्वचिद्दिवौकोभिरि-

वामृताशनैर्विहङ्गमैः कृतकलकलाम्, क्वचित्व-लाहकै रिव वनगतै स्समदश्वापदकुले विंहित निश्वा नसंकुलाम्, क्वचित विस्मितामिवशब्दरहिताम्, क्वचित् जरदजगर प्रमुखविषधरवर निकर शरण्या मरण्यानीं दूरतो ददर्श ।

निवारयद्भिरिवेत्युत्प्रेक्षा, एवमभिलपद्भिरिवेत्यत्र । सुपर्णः शोभन पर्णाश्रयः वैनतेयश्च, हरिः कपिर्विष्णुश्च । लक्ष्यता दृश्यता शरव्यताच, पतत्री पक्षीवाणश्च । वारणोगजः, निवारकश्च, जाम्बवानोकहोजम्बूवृक्षः शिखरीपर्वतः, कनकोधत्तुरः कनकं सुवर्णंच, खर्जूरः तदभिधोवृक्षः खर्जूरं रजतं च, वंशोवेणुः कुलंच । घनाघनः घातकगजः वर्षदम्भोदश्च, घनंसान्द्रम् । सम्परायो युद्धम्, खड्गः गण्डकः असिश्च सारङ्गो मृगः वैष्णवं धनुश्च । भीमसत्वभ भयानकोजन्तुः भीमसेनस्यवलंच । कीचकः तन्नामधेयोवीरः अनिलाघातेन शब्दकारकोवेणुश्च, कौरवः दुर्योधनादिः शृगालश्च । सहचरी अनुचरी पीतकुरण्टकश्च । मवालः किसलयः विद्रुमश्च । मदनोमरुवकवृक्षः कामश्च । पुंनागः प्रशस्तः पुमान् केसरश्च । अलका कुबेरपुरी, रम्भा स्ववेंश्या कदलीवृक्षश्च । नेत्रं नयनं सरित् द्रुम मूलं कस्तूरिकामृगश्च । कुष्ठो व्रणविशेषः भेषजविशेषः आमलकीच, गुल्मिनीलतेतिवा, वहनं वाहः सोऽस्त्यस्मिन्निति्वाहि,नीरंजलं हितं यस्या यितिवा । अमृताशनैः आमलकी भक्षकैः सुधाभक्षकैश्च बलाहको मेघः, वनगतैः वनं विपिनं गतैः प्राप्तैः, गतंवनं जलंयेभ्यस्तैः त्यक्त जलैरिति यावत । जातिकालसुखादिभ्यः परानिष्ठावाच्येति वार्त्तिकान्निष्ठान्तस्यपरत निपातः । जरदजगरः वृद्धोऽजगरनाम धेयस्सर्पः । अरण्यानी महारण्यम् ॥

अचिन्तयच्चचेतसिचिरं समालोच्य श्रीमतां तदीयाम्, साकं चक्रवाकविलसितेन आतपप्रतापेन कौशिककुल क्लेशेन नववधूविनोदेनच परिणतोदिवसः, मधुपरा जिराजित राजीवसदनान्तर्विलसन्नवमधूनां चिराय निषेवणादिवकरैः, वरुणवरवर्णिनी प्रोक्षितवक्षोरुह– क्षितिधर निरीक्षणप्राप्त प्रौढ़गाढ़ानुरागादिव, समुदे- योन्मुखद्वेषणपीयूषकरसख कैरव कदम्बकावलोकनो द्यद्रोषादिव, कालमेषिकारुणतामुपयाति मैहिरंमहः। आश्रयितु मनुसरतिसूरः परिहृतवसुनखेवरत्नाकरम्, निजनिजशावकावनाय गृहीतविघसआवासनीड़ दिशमभिप्रयन् प्रयातिगणः खगानाम्, तदिहैवपुरि पुरोभागमलङ्कुर्वति दिव्यदिव्योपपाद कोदवमिते नेतव्या यामिनीति, ततस्तत्रैव समुपेत्यावस्थिति मकरोत्। तदनु भगवती मुपास्यसन्ध्यां विधानैरप- चित्यचेत सानन्येनदेवं केवलं प्रत्यवसिततदीयनैवे- द्यो विभाव्य बालामिव तरुणिमानमाश्रयन्तीं, प्रवर्त मान यामिकजनारवां युवतिमिव कलाकरगृहीतम– ध्याम्बरां रजनीमवलम्बित कम्बलासनः सुखं सुष्वा- प। अथ त्रियामापरिणतिं पिशुनयति मागधनिकर इव कलरुतं कलयति कलविङ्के, सान्द्रनिद्रान् प्रवोध यितुमिव [illegible]

ताम्रचूडे, शीतलं वहति मृदुलमनारतकेलिश्रमस्वे-दशीकरनिकरापहारिणि चुम्बितचन्दने परिशीलित-कावेरिणिमलयसमीरणे, प्रियागमनप्रतीक्षाक्षपिता-खिलक्षपाक्षणाहितामर्षेणेव

अचिन्तयदिति, यामिनीतीत्यनेनान्वेति । साकमिति सहोक्त्यलङ्कारः । कौशिकः उलूकः । दिनेतस्य दर्शनशक्तितिरोभावात् क्लेशः । विनोदेनेति, रात्रौतासां क्लेशोदयाद्दिव सएवसुखम् । मधुपोभ्रमरोमद्यपश्च राजीवं कमलं तदेवसदनम् । मधूनां पुष्परसानां मद्यानाञ्च, करैः किरणैः हस्तैश्च । मद्यालये मद्यपास्तीष्ठन्तीति वस्तुस्थितिः । वरुणवरवर्णिनी पश्चिमाशा, प्रोच्छ्रूतः उत्तुंगः । शेषादिति अन्योप्यरातिसपक्षोन्नतिं विलोक्यकुप्यतीति । कालमेषिका मंजिष्ठा । इमाअलंकारान्तरोत्था उत्प्रेक्षाः । शूरः सूर्योवीरश्च, वसुकान्तिर्धनंच, रत्नाकरः समुद्रः रत्नानामाकरोभूपतिश्च, वीरस्तेजसारहितोजलादौ प्राणान्जहाति, इतरोऽपि विगलितविभवः प्रभूतरत्नं पुरुषमाश्रयते । विघसः स्वभुक्तावशिष्टः । दिव्य उत्तमे, दिव्योपपादकोदेवः । अपचित्य सम्पूज्य । प्रत्यवसितं भुक्तम् । कलाकरश्चन्द्रः सकलकलाभिज्ञोनायकश्च, अम्बरमाकाशं वसनं च । पिशुनयति सूचयति, कलरुतं मधुरशब्दम् । कलविङ्कचटके । ताम्रचूडे कुक्कुटे ।

लोहितवदनायां पुरोदिगङ्गनायाम्, सुचिरसमयव्यापृतनिधुवनरभसपरिश्रमालस विलासिन्यामिव निमीलित प्रायतारकायांक्षणदायाम्, परिव्राजकेष्विव स्निग्धदशाविधुरितेषु भ्राम्यत्सु विशिखेषु प्रदीप नि

वहेषु, वियुक्तजनायतोपचित निः श्वासवैश्वानर नितान्तपरीतापेनेव प्रोन्नतसपत्नारुणवैजयन्ती प्रदर्शन जनितासोढ शोकेनेव क्षणमप्यविषह्य प्रेयसी वियोगे नेव अधिपश्चिम सलिलनिधि निमज्जति निशानायके, वटुपटलसमारब्धस्वाध्यायाध्ययनध्वान प्रबुद्धाध्वनीन धृतासुपद्धतिषु, प्रमथगणेष्विव भैरवरागानुरञ्जितमानसेषु लोकेषु प्रत्यूषसि विसृष्टशयनो निर्वर्तित स्नानादिक्रियो नातिदूरसुरपदं समारूढे सारस मिव जगतीतलं विकाशयितरि सवितरि दक्षिणादेशायायिनीं पदवी मशिश्रियत् । अशृणोच्च

" हरिभक्तिभरश्शरीरिणां, यदि वाधैरतिरस्कृताभवेत् ।
जनविस्मय दायिनीतदा, संसिद्धिर्नचिरायजायते ॥"

इत्यपरवक्त्रकं मधुरस्वरेणोद्गीयमानं केनापि । ततोऽतिक्रान्तेषु कतिपयकालेषु पौरस्त्याकलितस्यतन्महावनस्य प्राच्येनाध्वना प्रतिषिद्धगमनेनाप्यविदित प्रवृत्ति र्गच्छन्नभिवीक्ष्यान्तरीक्षमध्यलक्ष्मीमालिंगितु काममिवोद्यान्तं तीक्ष्णमरीचिमालिनं माध्यन्दिनसवनायतत्सवेशेसन्निवेशेन निरन्तरदलसन्ततीनामातपत्रानुकारिणो निषंगस्येव शिली

तारका नक्षत्रम् अक्ष्णोः कनीनिकाच । परिव्राजकोयतिः, स्निग्धदशा [illegible] प्रेमयुक्त दशा च, [illegible] घू-

र्णमानेषुच, विशिखेषु हेतया शिखयाचरद्दितेषु, आयतोदीर्घः, वैजयन्ती पताका प्रेयसी निशात्मिका । अध्वनीनः पथिकः पद्धतिर्मार्गः । सज्जयन्तीष्विति वहिर्गमनायेति भावः । भैरवरागः शिवविषयिणीप्रीतिः भैरवाभिधानोरागश्च, सुरपदम् आकाशम् । इरीत्यादि, एतेन भाविकालभुजगभीतिशान्तिः सूचिता ॥ अपरवक्त्रकं वृत्तम् । पौरस्त्यं पूर्वम्, प्रतिषिद्धेति कालसर्पोपद्रुतेरिति भावः, अविदित प्रवृत्तिरितिगमनेहेतुः प्रवृत्तिः वृतान्तः, सवनायपूजनाय, निरन्तरदलसन्ततीनां सन्निवेशेनेत्यन्वयः । निषंगः इषुधिः, शिलीमुखो वाणः मधुकरश्च ।

मुखनिषेवितस्य तरुणीचरण पुरातनाघातसंजातको पादवसरं सरन्नेववैरिविरहिणी दहनाय प्रत्यग्रप्रवाल जालच्छलेनानलास्त्राणीवसन्दधानस्याशोकानोकह - स्य शीतलेतले गृहीतासनोनारायणनमस्या मतनोन्ना नाविधैर्वनभवप्रसूनैः । अथतद्घाटिक महाटवीनिक टातिस्फुटरणत्प्रोद्भटघण्टिकाटङ्काराकर्णनोद्रिक्त क्रोधा तिरक्तनेत्रजगतीग्रासप्रसक्तशक्तव्यक्त समभिद्रवत्का- लकरालवक्त्र निर्यद्धालाहलमहानलज्वलज्ज्वालाजा लजर्जरितसनसा श्वासनिश्वासश्वसनस्यदसन्दह्यमा नविपिनम्, प्रकृत्यैवाऽक्षेत्रतयाक्षान्ते दिक्षुविदिक्षुचाल क्ष्याण्यपि प्राणिलक्षाणिक्षणादेवप्रत्यक्षमात्रेणाति तमां क्षोभयन्तम्, अन्तकस्यापि भीतिमुपजनयन्तं, वनदे वतामपि कान्दिशीकतांनयन्तम्, प्रकुपितभोगिराज मिव वर्धितभीषणभोगभाजं, भाद्रभीमदर्श विभावरी-

मपी[1] कालभावादधः कुर्वाणम, अहर्पतिर्दर्पस्फुरत्फ-णाफूत्कारस्फारथूत्कृतीनां वृष्टिसृष्टिभिस्तिरोदधतम्, भैरवरूपिणमप्यशङ्करं, काद्रवेयपतिकम्पसम्पादक म-प्यशेषकम्पलम्पटम्, शोषयन्निवायूंषि सर्वतोमुखानि जनिजुषाम् उन्मत्तमिवमदं, यौवनमिवक्रूरभावस्य स्वरूपमिवमहोत्पातसागरस्य, अभिमानमिवहिंसा-याः सर्वस्वमिवकरालतायाः, धावमान (१) माञ्ज नपुञ्जमिव, तमस्तोममिव, श्यामलशिलोच्चयमिव, सान्द्रतमाल तरुसमुदयमिव, यामुनह्रदमिव समुद्ग-तम्, पातालान्धकारमिव मध्यभुवनमाश्रित माजङ्घ्यमानं कालसर्पेन्द्र मर्पितमात्रे जपेपश्यन्नेवपुलकि-तस्स्वेदितस्समवेपत । समस्फुटदिवचसहस्रधा।

आघातेति युवतिपदाघातेनाशोके पुष्पोद्गमोभगवतीतिकविसमयः । अवसरं प्रिय वियोगात्मकम, सरचेव प्राप्नुवन्नेव । अकतोहोवृक्षः नमस्यां पूजाम् । तद्घाटिकः तस्याघटिकाया अयम् एषचटङ्कारस्यविशेषणम्, नेत्रान्तंचवक्त्रस्य, कालोयमः नमानासिका, निः श्वासोमुखवायुः, स्यदो-वेगः, अलक्ष्याणि द्रष्टुमर्नापितानि, कान्दिशीकृतां भयद्रुतताम्, भोगि-राजं शेषनागम्, भोगःफणा कालभावात श्यामत्वात्, भैरवश्शिवोभयानक श्च, शङ्करश्शिवः कल्याणकारकश्च । काद्रवेयोनागः, अशेषकम्पलम्पटम्

---

१ घाड्धातोरात्मनेपदित्वमपि प्रयोगे दृश्यते, यथा हर्षचरिते गंगावर्णने "घर्मघेनुर्मिवा, घोमायमान धवल पयोधराम्" इति ।

न शेषकम्पकम्पटम् । अशेषाणां सर्वेषांकम्पेकम्पटंच । सर्वतोमुखानिसलिलानि, रूपकम्, । उन्मत्त मिवेत्यादौ सर्वत्रोत्प्रेक्षा । आजङ्गम्यमानम् कुटिल मागच्छन्तम्, गत्यर्थात्कौटिल्येयङोविधानात् ।

हृदयेन, ततः क्षणैनैव धैर्यमाधाय प्रतिविधानं विमृशन्नपिसाधनान्तर मनवलोकयन्

"कारुण्यैकरसामनन्यशरणश्श्रीमन्तमभ्यर्थये
कालग्राहमुखान्तरालपतितं गोराजमाम्पालय" ।

इत्याकस्मिकावभासेन पद्मपादयुगळेन भक्तवत्सलं हरिमापन्नार्तिनाशनमार्त आर्तथत । अस्मिन्नवसरेद्रागेवसमुद्भूतोग्रनिरवग्रहावग्रश्श्रादगृहीताङ्घ्रिसिन्धुराग्रयः, करुणासिन्धुर्दीनबन्धुर्मधुनिषूदनोऽतिदन्तुरं, तुरगरूपमतनुतनुकं, पृथुप्रोथं, ग्रीवापघनप्रभवलोमस्तोम प्रतिरुद्ध यादृच्छिकवाहिवाहप्रचारम्, अजस्रं विपुल पुच्छ गुच्छ धूनन घोणकोण निर्गच्छत्प्रभञ्जनाभिक्षिप्ताभ्यर्णचरसहस्रं, विकटटापकुट्टनभयकम्पमानकूटभृतं, स्वायतागतमपि विततमतमश्श्यामरश्मिसम्बद्धं, हयग्रीवभक्तिभरविवर्तमपि उच्चैश्श्रवसं भीष्मेणाप्यशान्तनवेनाक्षियुग्मेनाभिवीक्षमाणम्, ऊर्ध्वीकृष्टमूर्धानमुपधायवधाय शतधासत्वरतरन्तमुरगवरं विभज्य वज्रविद्वेषिणाप्रोन्नतेनदन्तेनान्तिकमन्तकस्य झटिति समयापयत्, क्षणेनपुनरदृश्यतामुपागमत् । सचतदानीं कलावेतमद्भुतमभूतपूर्वञ्चात्मनि

भगवतोऽनुभावं निश्चितेनचक्षुषानिरीक्ष्यशमनवदन गर्भमुक्तमिव, अभिनवं जगतिजातमिव, दहनोदरादागतमिव, महोदधिमध्यनिमज्जनान्निस्तृतमिव, शान्तैनसं स्वंमन्यमानंपरिच्छेदरहितैः, परश्शतैरपिवचोभिरगोचरैः, हर्षप्रकर्षैरन्तर्मातुमशक्नुवद्भिरिववाष्पकैतवेनवहिरागतैः कियत्कालमवापवाह्यान्तर्वृत्तिविसर विधुरां, मोहमयीमिव, शून्यमयीमिव, कैवल्यमयीमिव दशाम् । ततोऽभितोष्टुय्यप्रकटितदयोदयमिष्टदेवं विधायचनिर्वाधसञ्चारं तत्प्रदेश मवाप्यचानपायिनं सकलामोदिनमकलङ्किनंकमपियशः कलाकरं निश्शङ्कः परास्तातङ्क ऋजुनैववर्त्मनाप्रववृतेगन्तु मिति ॥

इति मैथिल श्रोत्रिय श्रीबालकृष्ण मिश्र विरचितायां

श्री ५ लक्ष्मीश्वरी चरिताख्यायिकायां

प्रथम उच्छ्वासः ।

रसा भूमिः । शार्तथत प्रार्थयत् । निरवग्रहोनिः प्रतिवन्धः, अवग्रहो विघ्नः, सिन्धुराग्र्यः गजेन्द्रः, तनुः कृशश्शरीरं च, प्रोथः नासिका, अपघनोऽवयवः, घोणोनासिका, कूटभृत् पर्वतः, रश्मिः प्रग्रहः किरणश्च, हयग्रीवो नारायणः, उच्चैश्श्रवाः इन्द्रतुरगः । उन्नतकर्णश्च, वज्रविद्वेषिणा वज्रतोपिकठिनेन, शमनोयमः, अभिनवमिति जनिक्रियाविशेषणम् । एनः पापम्, भीतिजन्यदुःखभोगेन पापशान्तिरितिभावः । वाह्यवृत्तिः वाह्येन्द्रियसन्निकर्षजन्यावृत्तिः अतथाभूताचान्तर्वृत्तिः, विसरः संभूतः, । निश्शङ्कत्वं परास्तातङ्कत्वंच ऋजुवर्त्मनागमनायप्रवृत्तौहेतु रिति ॥ इति प्रथम उच्छ्वासः ॥ ❋ ॥

# अथ द्वितीय उच्छ्वासः ।

पुण्याचरणपवित्रितकायोऽमलमानसोनिरतः ।
केशवचरणसरसिजेप्रभवतिकर्तुं न किं कस्मिन् ॥

अथगच्छतश्चास्यत्रहुमदइवदुर्गंधक्लेशान्त कारकः, वलीयानिवशूरकरमन्दकरः, कांसार इव मनाग्दर्शितवासरः, नागरतरुणइवश्यामानन्दनः, लौकायतिकइव अभियातिमदागतिः, शाकद्वीपइव प्रियंचित्रंनिषेव्यमाणे भानुः, यातुधानइव अमृतावगाहनसुखवञ्चितः, व्यभिचारिनाथकइव परमहेलाधररसलम्पटः, तिमिरोत्करइव तापनाशनः, शाब्दिक प्रयोगइव वाहुलकानुगतः, हरिगिवाननिशयितसुरतामोदजननः, साधुरिव प्रदर्शिताभिनन्दनीयफलशालिमार्गः, निदिध्यासनसमाधिरिव प्रमुदितक्षेत्रवान्, नयरङ्गितभूपतिरिव विगतकमलोच्चयः खलशोभावहश्च, कामयमानइवजातपुलकः, हेमन्तसमयस्समीयाय, यत्राञ्चलवितानाञ्चितकुचशिखरियुगलान्तराल नीतवदेनास्सुकृतिनोयुवानः प्रमदयानन्दसन्दोहमनुभवन्तिकमपि, पृथुकरूपमाकलय्य संयाततनयाइवासादयन्तिसुखंकृषीवलाः, सुपीमबहुलेनापियेनोपचीयतएवसन्तापो वियोगिनाम्,

श्रीः । पुण्येति, एतेन भविष्यन्ती भूपतितनयरोगशान्तिस्सूचिता । क्षुरकरः रविकिरणः वीरहस्तश्च । वासरः दिनं सर्पविशेषश्च । प्रकृतेदिनस्य लघुत्वेनमनाग्दर्शितत्वमितिभावः । श्यामा रात्रिः तदानन्दनोवर्धकत्वात् मुग्धयौवनाच । लौकायतिकश्चार्वाकः, अभियातिः, द्वेष्यः, सदागतिः पवनस्स्वर्गश्च । चित्रभानुः भास्करोऽनलश्च । अमृतं जलं सुधाच, अवगाहनं स्नानमास्वादश्च । परमाहेलासुरतस्यप्रौढेच्छायत्रसचासावधररसस्यलम्पटश्शोषकः, तत्र व्रणोदयादिति । अन्यत्र परमहेलायाः परकीयवनिताया अधररसस्यलम्पटः कामुकइत्यर्थः । तापस्यनाशनः अन्यत्रतापनस्यभानोरशनः भक्षणीयइति । बाहुलकः कार्तिकः । बाहुलकं क्वचित्प्रवृत्तिरित्यादिचतुर्विधं शब्दशास्त्रेप्रसिद्धम् । सुरतामोदः सुरतेनामोदः देवसमुदायामोदश्च । अभिनन्दनीयफलाश्शाल्यो यत्रसचासौमार्गः मार्गशीर्षः । अन्यत्रतादृशफलेनशालीशोभमानोमार्गः पन्था इति । क्षेत्रवान् कृषीवलः जीवश्च । कमलोच्चयः पङ्कजसमुदयः लक्ष्मीसमुदयश्च । खलः धान्यस्थापनादिस्थानंदुष्टश्च । प्रमदयेतितृतीयार्थोनयनक्रियान्वयी । पृथुकः चिपिटान्नं बालश्च सुषीमः शैत्यम् ।

ततोविपुलफलभरभाराभिनन्दितजनिजुषांखपुरखर्जूरलाङ्गलिप्रमुखशाखिनां भुक्तविप्रलम्भाभिरिववल्लरीभिस्सविस्रम्भदृढपरीरम्भारम्भसम्भोगसम्भावितानां शातकुम्भशोभिसुरभिसम्भृतस्तम्भोरुप्रसवसम्भारोपलम्भाति भासुररम्भाजम्भलद्रुमाणां स्तम्भितजम्भाहितारामरमणीयदम्भामुपाटवींविलोकयन् प्रमोदमानमानसोऽसौनातिदूरेरसवतीरसानुभूषयाऽऽगतंविद्या

खरपुरमिव सागमोल्लसितद्विजनिकरंकुसुमसमयमिव, परिक्षयाकृतपरिवेषं चन्द्रमण्डलमिव, सानेक प्रालेयशैलमिव प्रासादैः, दुग्धोदधिमिव मणिमौक्तिक विद्रुमैः, पुरुहूतपत्तनमिव बुधगुरुकविकलाधरैः, विशङ्कटसङ्कटं, निरर्गलार्गलगोपुरं पुरं पुरतः सम्बराये चित्ररेखाप्रभृतिलेखालयाङ्गनाजनेष्यमाण निष्कृपकृप णलेखासमुदयस्य, जलधरस्येवविमलतरवारिधाराधधीरितपरिपन्थिप्रतापस्य, सरसइव पद्मोल्लासभासितस्य, प्रौढयुवतिवक्षोरुहस्येव सुवृत्तमनोहरस्य, पवनाश ननायकस्येव धृतक्षमस्य, प्रकृत्यादक्षिणस्यदक्षिणक्षोणीरक्षिणोनिरीक्षमाणः क्षिप्रमेष्यन्तीं क्षपाकापालिकी मवधायसन्ध्यया तदीयपानाय सम्पादितइव मदिररसे रागकैतवेन, दिवसश्रियाश्रितवारुणीकेऽम्बरंपरिहरति पश्चिमगिरिगहनकेलिकामुके पूषणि,

जनिजुषां प्राणिनाम्, सर्वेषामेवतद्वासेरित्याशयः। खपुरः गूआक पादपः, लाङ्गली नारिकेलः, शातकुम्भं सुवर्णम्, भुग्नः, कुटिलः, उरुः महान्, जम्भलः दाडिम्बः, जम्भाहितः इन्द्रः, रसवतीपृथ्वी सरसावनिता च, अनन्तभोगी असङ्ख्यातो भोगवान्, अनन्ताभिधानोनागश्च, सागमेत्यादि, आगमश्शास्त्रम्। द्विजो विप्रः, अगमोवृक्षः, द्विजः पक्षीच पत्तनं नगरम् बुधः पण्डितः चन्द्रात्मजश्च, गुरुः श्रेष्ठः बृहस्पतिश्च, कविः, कव-

यितो शुक्रश्च, कलाधरः कलाभिज्ञश्चन्द्रश्च, विशङ्कटैः महद्भिर्जनैः सङ्कटं व्याप्तम्। निरर्गला अबाधिता अर्गलापरिघोयत्र तादृशं। गोपुरं पुरद्वारं यत्र तत्तथोक्तम्। सम्परायोयुद्धम्, एतेनराजविषयिणीचित्रलेखादिनिष्ठा प्रीतिर्ध्वन्यते। विमलेति, विमलयातरवारेःखड्गस्य धारया, विमलतरया वारिणोधारयासम्पातेनच,। अत्रधीरितः परिपन्थिनां, परिपन्थीच प्रतापस्तेजःप्रकृष्टस्तापश्चयेनतस्य,। पद्मोल्लासः सम्पदः, कमलस्यचोल्लासः,। सुवृत्तं शोभनप्रवृत्तिः तेन मनोहरः। सुवृत्तो वर्तुलोमनोहरश्च, पवनाशननायकः शेषः, क्षमा शान्तिः पृथ्वीच, रक्षिणइत्यस्यपुरमित्यनेनान्वयः,। तदीय पानं क्षपाकापालिकीकर्तृकं पानं। क्षपागतो गनाशादितिभावः, वारुणी पश्चिमाशा,मद्यंच, अम्बरमाकाशं वसनंच, दिवमश्रियेति श्रयणेकौलौचान्वेति तृतीयायास्सहार्थकत्वात्।

निशावसानोन्मिषत्प्रणयकलहकुपितापनोदनान्तशयतरणिसमुदयावलोकनायातभामिनीमानापहरणोत्कलिकाकलापमुपनेतुमायातिकुमुदिनीनायके, सञ्चरणमारभमाणेषु शम्भलीजनेषु, अभिसरणपथ्यनेपथ्यधारिकास्वभिसारिकासु, सखी सुरत कौतूहलोदवसिते वयस्याभिः स्थाप्यमानासु पञ्जरस्थसारिकासु, विधिवश विघटमाने चक्रवाकमिथुने, त्रिदिवमिव साप्सरोहंसकरणितरामणीयकम्, कृष्णचरितमिव शुकभाषितम्, सदाचरणपरायणमिव सुकृतमालाचितम्, तारुण्यमिव मन्मथव्यापितच्छायम्, अभिजन

मिव पुन्नागदीपितम्, अनागरिकमपि श्यामालिंगितम्, नवदरेणाऽपिवदरेण पलाशिनाऽपि हरिप्रियेण रुचिरम्, चम्पकवकुलमालती माधविकाकामिनी मदनमञ्जरीद्रुमैर्मञ्जुलम्, वियोगिविसरविशारणायमारसाधकाभिचारमन्त्रोच्चारणध्वनिभिरिव परिमलमुदितचञ्चरीकनिचयगुञ्जितैरासञ्जितम्, । अलकाया इव पुटभेदनाद्बहिर्विद्यमानमुद्यानं सान्ध्यविधिविधानाय समासाद्य सम्पादिताशेषकृत्यः क्षपां क्षपयितुङ्कस्यचन घनच्छदन ·ाखाविशालस्य रसालशालस्य प्रच्छायतयाऽशीतलेतले विहितासनपरिग्रहः तदातदासन्नप्रदेशेषु भ्राम्यता नागरिकेण केनचिदा याय दर्शनमात्रोपजात

शम्भली कुट्टिनी । पथ्यं, समुचितम्, नेपथ्यं वेशरचना । साप्सरोहंसकः सजलसरोवरस्थहंसः तस्यरणितेन रुतेन रामणीयकंय च तत्, अप्सरसां पादकटकरणितेन यद्रामणीयकं तेनसहितञ्च । शुक्रः कीर शुक्राचार्यश्च । सुकृतमालाचितम् अतिशयेनशोभनैर्वाकृतमालैराजवृक्षैः, सुकृतस्य पुण्यस्य मालयापरम्परयाच व्याप्तमिति । मन्मथः कपित्थः मदनश्च, छाया पत्रच्छायाकान्तिश्च । अभिजनःकुलंदेशश्च, पुन्नागः देववल्लभपादपः पुरुषश्रेष्ठश्च । अनागरिकं नागरिक जनातिरिच्यमानं नगरेऽजातंच नगरवाह्यत्वस्य तस्रोद्याने वक्ष्यमाणत्वात्, श्यामामुग्धयौवनाप्रियंगुश्च । नवदरेण नवदरभिन्नेन, नवदलवता च, दलयोरैक्यात् ।

पलाशिना मांसाशिना पन्नवताच, हरिप्रियेण हरिप्रीतिविषयेण, हरिप्रियेण कदम्बद्रुमेणच। विसरः समुदायः। विशारणं मारणम्, मारः मारणकर्—स्मर स्सएवसाधकः अनुष्ठाता, तस्यञ्चसाधकः कार्यकारकश्चञ्चरीकः, उच्चारणध्वनिभिः अनेकेषां युगपदुच्चारणेध्वनिर्जायत इतिवस्तुस्थितिः" अभिचारप्रयोगेवाचिकजपस्यैवागमेविधानमितिनकाप्यनुपपत्तिः । अलकायाइवेति, "बाह्योद्यानस्थित हरशिरश्चन्द्रिकाधौतहर्म्या" इति मेघदूतकाव्येकालिदासस्य महाकवेरभिधानात्, पुटभेदनं पुरम्। क्षपयितुंगमयितुम्। छदनं, पत्रम्, शालोवृक्षः,

नितान्तभक्तिना सपदि शिशिरसुरसमुमनःसुरभितसरोवारिणावहुविधफलपुष्कलेनोपवनसमुचितेनातिथेयेनातनितसत्कृतिः प्रणम्य कौतूहलापहृतहृदयेन सविनयमन्वयुज्यत, देव ! सहजवैयात्यशतस्याधमतमजनस्य सुलभैवभवत्यशालीनता, याचक्षमणीयैवस्यात्सांसिद्धिकशान्तिशालिभिर्भवादृशैर्महानुभावैः, सौम्य ?

"स्वसजातीयोत्कर्षः प्रायेणहिदुस्सहोभवति"

इति भवदीय विलोकनाकलिताशेषसुखभागिनी लोचनेसोढुमशक्नुवानं श्रवणेन्द्रियं भावत्कचन्द्रवदनचन्दिरोदीरितपरिचयप्रवृत्तिसन्ततिनिशमनसुधामाधातुं प्रेरयति मामवहितम्, आर्य ! कतमं देशकं जीर्णारण्यतानीता, कस्यपुण्यास्पदस्यजनपदस्य

तिरस्करणीयानि तमांसि, कोवा ऽन्ववाय ईदृशमहार्घमणिलाभे नातिधन्यतामयासीत सुकृतिविशेषु, कोवा क्रोडे चकार शैशवदेशाया मोजोमयं तनयम्, किंविधानिवाश्रेयो भाञ्जि भवन्तमाश्रयन्त्यभिख्याक्षराणि, एवमुक्तवतितस्मिन्नसौ सप्रीति प्रत्यवूत्रीत, अये दर्शनमपितेतरांस्नेहयतिमेहृदयम् किम्पुनर्विवर्द्धमानसापहारिवचनम्, श्रूयताम् । अस्त्यशेषविषयशेखरो निखिलभुवनप्रख्याताभिख्यो मिथिलाभिधानो जनपदविशेषः यत्रच कोपितादृशो नास्त्येव भागोधरण्याः यश्चनपवित्रीकृतः क्रतुवरैः, यंच दक्षिणेन वृजिनानितर्जयन्तीव प्रोत्तुङ्गतरंगभंगघोषैर्भगवती भागीरथीवहति, यतएवमहर्षिगौतमकणाद कपिलजैमिनि याज्ञवल्क्यादयोऽध्यात्मविद्याव्रततिवीजभूताः प्रादुरभवन्, यतएव पण्डितमण्डलीमण्डनं मण्डनः वाचस्पतिरिववाचस्पति स्समजायत, तत्र प्रभाकरइव

पुष्कलः सत्तमः । अन्वयुज्यत पृष्टः । वैयात्यंधाष्टर्यम्, अशालीनता निर्लज्जता । चन्दिरश्चन्द्रः । कतमइत्यादिपर्यायोक्त्या कस्मादागतः, कुत्रगमिष्यति, कोवंशः, कः पिता, किंनामधेयमिति व्यज्यते । विषयोदेशः, अभिख्या कीर्तिः, घोषैः शब्दैः । व्रततिर्लता । मण्डनः मण्डनमिश्रः, वाचस्पतिः वाचस्पतिमिश्रः । तत्र मिथिलादेशे

राघवस्य, पुरुरिवपौरवस्य, चन्द्रइव यादवस्य, मनागप्यनामृष्टपरीवादपङ्क्तयाऽतिविशदयशसो घुसौतान्वयस्य निदानं नैमिषाटवीस्थलइव क्रतुसमाचरणविमलः, क्षितिपालभालदेशइव धीरोज्ज्वलः, शकापतिरिव वाडवकुलामोदकरः, श्रोत्रियाग्रेसरः षट्कर्मतयानयाधिकः, ठक्कुरोपनामधेयो विधीयमानमहाऽध्वरपञ्चकः कृतिकुलकमल विकाशकोगविकरः पवित्रयामासजन्मनाधरणीतलम् । येनात्मनासमानः प्रथमायां पत्न्यामुपदेशकौशलकृतकेनान्तेवासिनिकरे स्फीतमतितोयकरोबुद्धिकरः। रतिकान्तइव विबुधप्रसादकोऽसदलक्ष्यःकान्तश्चरतिकान्तो द्वितीयाया मुदपादिषाताम्, तयोरादिमो नगवारेति एरोगाढेतिनामकं संवसथमसङ्ख्यसङ्ख्याधदतिकान्तवैदुष्यपरितोषितेन महीभृतोपहारीकृतमुपार्जिजत्, यतो घुसौतन्नगवारेति घुसौतगढेति मूलग्रामौ प्राचीनसम्प्रदायानुरोधेन तावविन्दताम् । तत्ररतिकान्ततः कीर्तिप्रकरस्करः कीर्तिकरः ततश्चदूवदनाभिधानः परमपावनः प्रादुरासीत् । बुद्धिकरस्तु समस्तप्रशस्तक्रियावपास्तनिर्वादौ सुगृहीतसम्विदौ हलधरकेशवाविव गोकुलगोपकावकूरपक्षपातिनौ हलधरकेशवावजीजनत्, तत्रहलधरः शाणपाषाणकषणविमलीकृतं पुरातनंरत्नमिवरतनं के-

शवश्लाघ्यपत्न्यामरुन्धतीशीलं सन्दधत्यां गोविन्द-नामानं मां गोनू-श्रीहर्षौ च, कनिष्ठभार्यायां कविगण रुचिकरं रुचिकरं महायिक मप्युदपीपदत् । (१]

कतुरध्वरो मुनिवरश्च धीरः पण्डितः कुङ्कुपं च । वाडवो ब्राह्मणः वाडवानलश्च, कुलं समूहः स्थानं च, आमोदोऽपोंहर्षश्च । षट्कर्माणि यागादीनि, तदुक्तम् "इज्याध्ययनदानानि याजनाध्यापने तथा, प्रति-ग्रहश्चतैर्युक्तः षट्कर्मा विप्र उच्यते" इति । नयोन्यायः तत्र पञ्चैव कर्मा-णि सन्ति अतएव तदधिकः । महाध्वरपञ्चकञ्च "पाठो होमश्चातिथीनां सपर्यातर्पणं बलिः, एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः" इति । त्रिकाशकइति एतेन धरणीतलपावनत्वेन चरविकरणोद्दश्यमभिधामूलया व्यञ्जनयाध्वन्यते । कतकः सलिलप्रसादकरो द्रव्यविशेषः, तेनान्वर्थना-मत्वं सूचितम् । विबुधः पण्डितो देवश्च, असद्लक्ष्यः अमतामलक्ष्यः असन् अविद्यमानो लक्ष्यो यस्य स च । उदपादिषातामुत्पादितौ । सं वसथं ग्रामम् । सङ्ख्यावान् पण्डितः, अत्र विरोधालङ्कारोऽन्यङ्ग्यः । निर्वादो निन्दा । गोकुलं गवांकुलं व्रजपुरं शास्त्रं च, अक्रूरः मथुरावासी क्रूरभिन्नश्च । शाणपाषाणः निकषः । रुचिकरं स्पृहाकरं कविगणस्पृह-णीयपाण्डित्यशालिनमितियावत् । उदपीपदत् उत्पादयामस ।

तेषु श्रीहर्षः साम्राज्यमिव लावण्यस्य, सरूपमि-वरमणीयतायाः, सम्मोहइववामभ्रुवाम्, आनायइव

१ "धोनोदेव्याः प्रथमतनयः केशवस्यात्मजन्मा, श्रीगोविन्दोऽचकरकवेः प्रेमपात्रं कनीयान् । श्रीमन्नारायणचरणयोः सम्यगाधायचित्तं नत्वा सारस्वतमपिमहः काव्यतत्त्वं व्यनक्ति" इति गोविन्दठक्कुर प्रणीतस्य काव्यप्रदीपस्याद्य श्लोकः ।

मनश्शकुलिनाम्, प्रदीप्तपावकइव यौवतविवेकहविषाम्, प्रत्याख्यानमाश्विनेययुगलस्य, प्रत्यादेशः कुसुमकार्मुकस्य, प्रत्याहारोरुचिरजातस्य, निग्रहस्थानमसृतदीधितेः, परस्परप्रतिस्पर्धिशोभैरवयवैरुद्भासितो ल्पीयसावयसापूर्वभवानन्तभवाभ्यस्तसमस्तशास्त्रतयाऽधिजग्मौ समुदितामेव विशुद्धिद्योतमानानवद्यहृद्यविद्याम् । आससादच स्तोकेनैवकालेन कमनीयां विपुलापुलाकां प्रतिष्ठाम्, अनाकलितकैतवेन नाशायणे प्रणयेन पौरस्त्यान्यप्यधश्चकार वृन्दानि भक्तिभाजाम्, हन्त हन्त सचासौपश्यत्येव दग्धहताभि दुरजरठदीर्घयाप्यजीवने मयिज्यायसि सोदरे भ्रातरि विहाय मेदिनीतलं सुरधामललामताममिजगाम(१), तदिति विनैवस्तनयित्नुं कुलिशपातः कोऽपि, ततो विदितप्रवृत्तिराशापि मलिनाम्बरतां पर्यधात्, पश्चिमाचलकाननमगात्तापनोऽपि, अभिव्यापच्च मोहसन्तमसं जन्मिनां मनांसि, अपतत्समवायः सुमनसाम्, प्रावृषीव समाप्लुयतवसुमतीनयनसलिलासारैः, मुखरतामयततारतारैर्हाहाकारैरन्तरालंनभसः, असकृत्

---

१ "ज्येष्ठे सर्वगुणैः कनीयसिवयोमात्रेण पात्रेधियां, गात्रेण स्मरगर्व खर्वणकरे, निष्ठाप्रतिष्ठाश्रये । भ्रीरेव त्रिदिवं गते मयिमनोहीनेच, कश्शोधये दग्धाहद महो महत्तु विधिनाभारोऽयमारोपितः" इति [illegible] ॥

पृथिव्या अप्रथतवेपथुः(२), वाष्पपयः प्रवाहपतनभी-त्येव निद्रापि लोचनकं नाग्रहीत्, स्मरणीयतामया द्दालयः श्रेयसाम् अशिश्रियत् शास्त्रीयविचारसरसता-कथाशेषताम्, अविन्दत जलाञ्जलिसमज्यासुवा-ग्मिराजतावशकी, तथ्यमेतत् सर्वंसहावसुन्धरेति यत् तदा नैवव्यदीर्यतसहस्रधा शतधावा। नचातः पर-मदसीयवान्धवदशा शक्यते कथयितुम्, उद्बुद्धश्च कश्चिद्विकाशेमीलयतिचैतन्यम्।

आनायो वागुरा, शकुलीमत्स्यः। यौवतं युवतिसमूहः। समुदिता सकला समेधिता च। पूर्वभवः पुरातनः, भवोजन्म (१)। अपुलाका निस्तुषा निर्मलेतियावत्। दग्धदशेति खेदोक्तिः, भिदुरः कुलिशः, जरठः कठोरः, याप्यो निन्दनीयः। स्तनयित्नुर्मेघः, आशादिग्घातद्वास्तव्यश्च, मलिनाम्बरता मलिनाकाशता मलिनवसनताच। तापनोऽपि किमुत-साधुः। सुमनसां पुष्पाणां सच्चेतसां च। समाप्लूयत पूर्णा। अयत गतः। अप्रथत विस्तीर्णः। कश्चित् अनिर्वचनीयः।

आवृणोतीन्द्रियमिहिरं महामोहमिहिका, लुप्यते स्मृतिः, विलीयतेधृतिः, अपैति विवेकशक्तिः, अपह्रियतेदृष्टिः, कारुण्यपयोनिधौ पुनर्निमग्न मात्मानमपि नाधुनाजानामि प्रागेवापरम्, इत्यभि

२. अधकुलप्रपतवेपथुः पृथिव्या इत्यपि वा पाठः

धाय क्षणंतूष्णीमास्त, ततोविवेकेन स्मरणाहितवि-
कारं व्युदस्य वदितुमारेभे, अतिदुस्त्यजो वान्धवादि-
योगाहितः शोकस्सर्वप्रमाथी, यश्चाशमनवदनदर्शनो
निरयः, सलिलानिवर्तनीय आश्रयाशः, मन्त्रादिप्र-
योगानपहार्यः पिशाचः सम्प्रहाराजनितंशरविसर
शयनम्, प्रोद्दामदारुदहनादधिकतरं दहतिशोकात्मा
कृष्णवर्त्माकिमत्रविधेलिमम् केवलंविवेकितैव समाश्र-
यणीया, पश्यतु भवान् आत्मसात्करोति सकल
मेव जगति भगवती प्रेतभर्तुराज्ञा, शब्दायतेदु-
न्दुभिरनारतं महाप्रयाणपिशुनः प्राणिपटलानाम्, स-
र्वसत्वसंहारकारकोदण्ड स्सन्ततं परिभ्रमति, किस
लयकोणान्तदरलम्पाथःपृषदिव, सौदामिनीविलसि
तमिव, तप्तायसपात्राहितहविरिव, नैदाघवलाहकच्छा
यावस्थानमिव, प्रकुपितपृदाकुभोगमण्डलमिव, स्वाप्र-
शातमिव, जीवनं पारिप्लवं प्राणभृताम्, शरीरा-
णिच विसिनीसूत्राणीव, घनकालकल्लोलिनीपुलिना
नीवच्छिदुराणि, नचजन्तूनां वपुस्सहस्रेणापि सौहित्य
मुपयात्यौदरानलो मृत्योः, अतिशीघ्रवाहिनी किलन
श्वरता सरित्, विद्यतेचजीवशुको निर्गमनमार्गबहुल
एव शरीर पिञ्जरे, स्रोतस्वती प्रवाह पतित दारु-
द्वयसम्मिलनमिव संगतं जनानाम्, अन्नि क्रमणीय

स्सामयिक स्वभावः, अनुक्षणपरिणामिनः क्षणाः, क्लेशमयं सर्वम्, असारः संसारः, तदहं स्वदेशात् श्रीजगदीशवदनदर्शनेनानेकजन्मसञ्चितवाच्यकर्म बीजोद्भूतकलुषलताप्रतानैरावृता मात्मभूमिं प्रसाधयितुं राजसरइव सचित्रोत्पलं, रमणीकरकुशेशय मिव

इन्द्रिय मिहिरमिति, प्रकाशकत्वादिन्द्रियस्य मिहिरत्वम्, मिहिका शलेयः। व्युदस्य निराकृत्य। निरयोनरकः आश्रयाश आश्रयनाश-कोग्निः। सम्प्रहारो युद्धम्। कृष्णवर्त्मा दहनः। न्यूनताद्रूप्यं रूपक मलङ्कारः। दुन्दुभिरित्यत्रदण्डइत्यत्रच भेतमर्तु. रित्यनुषज्यते। अन्यत्रा-पि देवी पुजने वलिप्रदानावसरे पशोः महाप्रयाणसूचको दुन्दुभिस्ताड्य-ते। पृदाकुः सर्पः। स्वाप्नशातं स्वप्नसुखम्। पारिप्लवं चञ्चलम्। सौहि त्यं तृप्तिम्। परिणामिनः धर्मलक्षणावस्थान्यतमपरिणामवन्तः, क्षणाः भावाआत्मभिन्नाः। वाच्यं निन्द्यम्। सचित्रोत्पलं चित्रोत्पलाभिधान-यानद्या चित्रेणचोत्पलेनसहितम्। कुशेशयंपद्मम्.

कटकोपशोभितम्, अनिर्वचनीयरजतमिव साक्षिभा-सितम्, क्षितिपतिमिव निधिसन्निधिवर्तिनम्, तपोवन मिव ऋषिकुल्यागलितसलिलैः, द्वितीयातिथिमिव वि मलचन्द्र भागावलोकनैः, सुरपुरमिव इन्द्रद्युम्नविजृ-म्भणैः, व्रजामिदेशमुत्कलाह्वयमिति। सचैत दुप-श्रुत्य सुप्रीतचेताः सोऽयं गोविन्द इति हृदयसम्वादे नावधारयन्, अचिरादेष्यामीत्याभाष्य सहर्षं निर्गतो

व्रजनवेगविद्रुतपदोद्धूयमान धूलिधार मिमसुदन्तं नाथायकथयितुमिव पृथिव्या पांशुच्छलेनानुगम्यमान उपवने गोविन्दागमनमञ्जसैव राज्ञे निवेदयां वभूव, राजातु तन्निशमयन्नेव आनन्दाश्रुसम्पातस्नापितशरीरः स्रुतक्लेशो दधिधान कुम्भसम्भवं तमवेत्यान्तरैव चामरे वीज्यमानउच्छ्व सितैः, विनैवस्यन्दनमधि रूढो मनोरथरथम्, अननुश्रित एवानुयायिभिः पश्चादभिद्रुतोभद्रनिवहेन, अन्तरेणपार्श्ववर्तिन स्सहचरीकृत उत्कलिकाकलापेन पुरोगामिविधुरितोऽनुगतः पौरस्त्यं प्रस्थितस्यमनसः, भक्तिभरभार विभृतोऽपि झटिति तत्प्रदेशमायाव । ततो दर्शनादेव धन्यतममात्मानं मन्यमानः अपास्य शाश्वतिकमपि सपत्नभावं विधायचानेक विग्रहं शुभ्रांशुनाऽपिनखमिषेण निषेव्यमाणे, गोविन्द पादपवसायनखरकान्तिकैतवान्मन्दाकिनी स्रोतसेवसेव्यमाने, तदीयचरणाम्बुजे रसालीनशिरसा सप्रणयं प्रणम्य पश्चादागतस्य तन्नागरिकस्य हस्तादादायनृपसमुचितादप्यधिकैरुपचारैः कृतार्चनो वद्धाञ्जलिरवोचत ।

कटक एतदभिधानं महानगरं वलयश्च । अनिर्वचनीयरजतम् भाति भासिकं तुलाविद्यापरिणामभूतं रजतम्, साक्षिभासितं साक्षिणाचेनान्येन साक्षिणोपाधेनवभासितं दीपितं प्रकाशितम् । निर्विकल्पिकः, ज्ञोतश्च ।

ऋषिकुल्या तन्नामधेयानदी मुनेः जलवहनप्रणालिकाच। विमलेति, विमलं विगतं मलं पापंयस्मादिति, स्फीतञ्च, चन्द्रभागानदी चन्द्रभागः इन्दुकलाच। इन्द्रद्युम्नो महाराजः, इन्द्रस्यशतक्रतोः द्युम्नंधनंच, तस्य विजृम्भणैः चेष्टितैः विलासैश्च। सोऽयमिति, राजतनयाप्रयनिवर्तकोगण कृनिर्देशित इत्यर्थः। सम्वादेनेति, इदमपरं प्रातिभाभिधानं प्रमाणम्। नाथायेति, राज्ञः पृथ्वीपतित्वादितिभावः। अञ्जसाशीघ्रम्। सम्पातो धारा पानं पानम्। कुम्भसम्भवो महामुनिरगस्त्यः। भद्रं कल्याणंतस्य पश्चाद्भावित्वात्। अपास्येति, कमलेनसाकं सार्वदिकएवविरोधश्चन्द्रस्य तमपिशुभ्रत्वाल्लिप्सयाविहायेत्यर्थः, तेनगोविन्दे माहात्म्यातिशयोध्वन्यते, एवमग्रेऽपि। विग्रहं शरीरम्। अङ्गुष्ठनखयो र्द्वित्वादितिभावः। मन्दाकिनीति, अस्यागोविन्दपादप्रभवत्वं पुराणादौ प्रसिद्ध मिति। रसेति; एतेन साष्टाङ्गत्वं प्रणतौ सूचितम्॥

महाभाग? भगवतोदर्शनं समासाद्य सद्यः परिहृताव द्यकस्यमे प्रत्यपद्यत कृतार्थतां नयनद्वयम्, भवत्पाद पाथोजपरागस्पर्शलेशतोऽपि परमपवित्रतां प्रयातापु- रीयमधात्प्रधानतां नगरीषु गरीयसीषु, परमुपत्र्कार चैषा पितृप्रसूः, धन्यधन्यमिदमुपवनं यदनुगृहीतमा सनेन, तमोवहुलेप्यशेषजननिलऽधैतद्देशभागधेय सु- धादीधितिमण्डलोदयादत्रागतानत्रभवतः किमिव कथमिव च समाचरेयमिति तरलतां मन स्समाराधने प्रयाति, अभवदीयंवा नैवकिञ्चिदस्मदीयं वस्तु,

यत्तु तदुपयोगिभावं लभेत, नचवचसाऽपि तद्विधाने प्रभवामि, तथाहि अतीववृहतीपद्धतिर्भवदवलम्बनानां गुणानाम्, इयतीतुमे मतिपरिमितिः, किञ्च श्रित विदेशैः कोविदैशैरपि धिक्कृतमाध्वीकक्षुरसाभिभीवभरितभारतीभिरनुभूयभूयस्सम्भूयनूयमानात् तत्र भवतः स्तुवन् महार्घमणिमौक्तिकप्रवालहीरकाणामुपायनस्यास्पदे काचवराटको भवेय मितिमन्दाक्षमुपैति मेहृदयमिति । ततएवमभिनन्दितोऽयं तोयनिधिरिवासन्नरत्ननिधिस्तेजोविशेषानुभूत तदीयभूपभावः सप्रश्रयादर

'अवद्यकं पापम् । पितृप्रसूः, सायंसन्ध्या तमोबहुले, तमसाशोकेनाऽन्धकारेण च वहुले, एतेन दुःप्रवेशत्वं व्यज्यते । 'जननि, र्जनम, मण्डलं, चक्रवालं, समूहश्च, समुदयादिति, एतेनतमसिनाशिते आगमनमुपपन्नमित्याशयः । 'अत्रभवतः, पूज्यान, प्रयातीति, अकस्मात् महत्तमानां समागमेचेतसश्चाञ्चल्यं भवतीतिवस्तुगतिः ! तदुपयोगीति, आराधनोपयोगीत्यर्थः, नहितदीयेनैव वस्तुनातदादरोयुक्त इति भावः । 'तत्, आराधनम् । 'कोविदः पण्डितः । आसन्नेति, आसन्नः प्राप्तः समीपस्थितश्च, रत्नानां निधिपद्मादिर्येनयस्येतिवार्थः ।

दर्शनदत्तविस्मयापन्नमानसो विनयमपि विनीततां वेदयन्तं, भक्तिमपि भक्तिमत्तां शिक्षयन्तम्, ऋजुता

अपि मृदुतामादिशन्तं, वाग्मिवशानप्यतितरां त्रपातो यधोनिमज्जयन्तं, वरासने सहसैव समुपवेश्यवसुमतीपतिं सदयकरकिसलययुगेनसफलामाशिषां राशिं गुरुरिवसुरनाथकं, द्वैपायन इव धर्मात्मजं, मैत्रावरुणिरिव रामचन्द्रं, प्रणयेन घनसारक्षोदैरिव, पुञ्जितबिसच्छेदैरिव, पारदनिकरैरिव, नीहारविसरैरिव, शारदेन्दु किरणैरिव, दशनमरीचिभिर्धवलयन् नभोवलय मभाषत, भूमीपते। किंनाचरित मायुष्मता प्रेमभक्तीभावयोस्स्वरूपमादर्शयता, नन्वियं परमासीमा सत्कृतेस्सम्बिधानस्य, श्रद्धयानिष्पादितस्तनुरप्यादरोपचारः प्रीतेरतिशयं जनयतेनाम, किमुत ईदृशः, परन्तु जगन्नाथ विलोकनसमीहया गच्छतोमे माभवतुभङ्गोविधे रितिकस्मैचित द्विजन्मने दुर्विधाय देय मेत दुपहृतं सदयेनमहोदयेनेति। अथाय मुत्थाय प्राञ्जलोवद्धाञ्जलिना व्यजिज्ञपत् नाथ ?

' सहसैव, हठादेव, एतेनराज्ञिविनयातिशयोद्योत्यते, 'सफलां, फलेन पादपानुवन्धिना भविष्यदिष्टेनच सहिताम्, " रिक्तहस्तोन पश्येत्तु राजानं भिषजं गुरुम् " इतिस्मरणात्। 'मैत्रावरुणिः, वसिष्ठः। 'धन-

सारक्षोदः, कर्पूरचूर्णम्, ‘पारदो, धातुविशेषः। ‘नीहारः, तुहिनम्। भङ्गइति, तीर्थगमने हि मार्गेप्यातिथ्यग्रहणं निषिद्धम्। माञ्जलोमृदुः।

किं नविधत्ते सदागमोऽभिलषितम्, परां कोटिमानय-त्यानन्दनिस्यन्दोह्रदयस्य, दयानिधे ? विधेर्हतकस्य-प्रतिहतप्रवृत्तितया कालपाशप्रतीकाशेनामयेन क्वितय समातस्समास्कन्दिते, अनीकिनीनायक इव संवि-त्प्रयोग कुशले, माधवइव शुचिरुचिचञ्चिते, आलेख्य इव कृष्णविशदभक्तिभाजने, मधुमासद्रुम इव कुसुम सुकुमारकाये, मकरवगाकृष्यमाणमातङ्ग इव गोविन्द मात्रशरणे, दुस्सहसहस्रकरकरनिकर चिर संस्पर्श-मुकुलायमान शिरीषप्रमुख पेशलमृदुप्रसून इव, वि-धुन्तुदोदप्रदशनावदलितेन्दुमण्डल इव, तुलतापनो पक्रमकालिक प्रालेयगलदुत्पलप्रकर इव, प्राभातिक प्रदीप इव क्षामक्षामदशामुपेयुषि, स्थूलेश्वयथुभिस्स र्वाङ्गसङ्कतैः प्रवर्धिते, सन्ततविकाशिकाशश्वासैः स-म्भृते ज्वलनजाज्वल्यमानज्वरैः, विरहिते वलैः, आ-स्पदेमन्दभागधेयानाम्, प्रियपदे विपदाम्, परिशी-लितनये मदीयतनये सकम्पाभिः प्रतिकृतिपरम्पराभि रभावि भुजामिव प्रोद्भटभट वाग्भटानाम्, चरित

चरकाणाम्, श्रुतसुश्रुतरहस्यानाम्,

सदागमः सतां साधूनामागम आगमनम्, सन समीचीनः आगम शास्त्रञ्च, अभिधामूलया व्यञ्जनयैतयोस्सादृश्यं व्यङ्ग्यम्, हतकस्येत्यत्र कुत्सायांकन्, तेनविधि प्रत्ययस्त्र्याद्योत्यते, प्रतीकाशः सदृशः, आमयोरोगः, समातः हायनतः अनीकिनीसेना, संवित् तोषणं बुद्धिर्युद्धश्च। माधवो वैशाखमासः, शुचिरुचिः सूर्यकान्तिः शौचं दीप्तिश्च, कृष्णविशदभक्तिभाजने कृष्णेहरौयाविशदा निर्मलाभक्तिः प्रीतिः तस्याः। श्यामधवलतयोर्भागस्य च भाजने । सुकुमारोमृदुर्मनोज्ञश्च । गोविन्दोगोविन्दठक्कुरो हरिश्च । तुलतापनोपक्रमः तुलराशौरवेःसंक्रान्तिः । दशावस्थावर्तिकाच । श्वयथुः शोथाभिधानोरोगोपद्रवः । सकम्पाभिः निष्फलाभिः । भटवाग्भटानामित्यत्र विशेष्यविशेषणमात्र प्रातिलोम्यात् साधारणधर्मता, एवं प्रमदहुर्हृदगदतत्त्वमित्यत्रापि बोध्यम्, तत्र दुर्हृदः रिपुः, गदो रोगः, अविचिकित्सताम् असन्दिहानानाम् इति । चरितः ज्ञातोगतश्च, चरकोग्रन्थः प्रेष्यविशेषश्च, सुश्रतरहस्यं सुश्रुतग्रन्थ रहस्यं शोभनं शास्त्ररहस्यंच ।

प्रमदद्दुर्हृदगदतत्त्व मविचिकित्सतामपिचिकित्सकानाम्, अभाषतच नैपुण्येन ग्रहगणवैगुण्यग्रहणगवेषणे देव! सदैवदैवविद्भिः, राजन् नशक्नुवन्ति प्रतिविधातुमेतत् क्रियाकुशलकरपंकजाअपि, व्यपनीतशङ्काअपि, क्वचनानाकलितकलङ्काअपि भिषङ्मुकुटालङ्कारभूताअपि, अगदङ्काराः, विषमेष्वपि रोगरहस्यमाहितातङ्काअपि, किन्तु इह यत

च्छयागतं समग्रमैथिलाग्रजन्माग्रगणन गोविन्दपदार विन्दमेवविन्देत तदपाकरिष्णुतामिति । ततः प्रभृति स्वस्मिन्नपश्यतातद्विधभाग भागितां भारतीभिश्चता-भिर्निराशीकृतेन सुतजीवने क्षणेऽस्मिन्नुपवनेऽकस्माद श्मोच्चयमानकश्मलघस्मरं स्मरस्मारकानुकम्पासम्पा-दितं, परिशुष्यच्छालि वीरुदावलीषु पीयूषवर्षणमिव, प्रभञ्जन प्रवेगोन्मज्जन्महोदधि मध्यवर्ति प्रवहणा-धिष्ठितजनै र्विधिवशादवाप्तमालम्बनमिव, निस्तरु-च्छायास्तवारितयाऽतिदुस्तर प्रान्तर विस्तरान्तराले ज्वलनकणमिव परस्सहस्रैस्समन्ततोमुञ्चतिकरैर्नैदा-घतीव्रमरीचिमालिनि, धूलिधाराभिर्धवल रूपत्तां दधाने प्रवाति पवमाने गच्छतांपथिकानां

.ग्रहणं ज्ञानम् । प्रतिविधातुं प्रतिकर्तुम् । रंगहोवेगः । अगदङ्कारो वैद्यः । अग्रजन्मा विप्रः । मानं परिमाणम् । कश्मलघस्मरं पापनाशकम् । स्मरस्मारकोहरः । वीरुत् लता । प्रभञ्जनो महावायुः । प्रवहणं नौका । निस्तरुच्छायास्तवारितया, वृक्षच्छायया जलेनच रहिततया ।

नभसोव्यापनमिवधाराधरैः, अन्धयतिसन्तमसेसी दतः सुधाकरोदयनमिव, भावत्कमागतं निशमय्यतैव समयायिमया, नच भवच्चरणामृतमन्तरेणास्तिशरणा-

न्तरं किमपीति । एवं विज्ञापितएव तदीयक्लेशवि-शेषमुपश्रुत्य आयतनीकृतः स्वेदेन, क्षेत्रीकृतो वैमनस्येन कवलीकृतश्चिन्तया, अवधीरितः प्रसन्नतया, क्रोडीकृतः करुणया ऽवनीभूतः भयात्तमुद्यतं जीव भुवनोत्सवं जानन् शमनभवनकृतगमनमिव मन्यते स्म तस्य तनुजम्, अवादीच्च आयुष्मन् भवदात्मजामयनिशमनेनावदीर्यमाणहृदयस्समुदितदयोपि अप्रभुतया भव्रनेभाजनमेव भवानि केवलं विषादस्य। अथ स्थिरानाथस्तथाकथितोऽपि वोध्यमानोप्यनेकाभिरुपपत्तिभिर्यदामुहृढहृदाध्यवसायो निजनिश्चयान्न विचचाल, अनन्यसाधारणयाचधिषणया तमेवगोविन्दमेतमेतमवधारयन्नाभिनिवेशाद्विरराम, तदायमच्युतं चेतसिचिरायसन्निधाय उपश्लोकयन्नयाचत भगवन् यश्च भवान्

"आपत्पादपदारणो, द्विरदपत्राता, मधुध्वंसनो,
वन्धुर्दीनजनस्य, यादववनामोदी, विनोदीसताम् ।
सूत्राम्णो व्रजवारणो धरणिभृद्गोवर्धनस्योद्धृतेः
भक्ताभ्यर्थितभावको विजयते कारुण्यकारीहरिः ॥
दयालोरसमर्थस्य दुःखायैव दयालुता ।
दीनोद्धारधुरीणस्य सातवैकस्य शोभते ॥"

चरणस्यामृतंजलमेवसुधातत् । भुवनं लोकः । भञ्जने भङ्गकरणे स्थिरानाथः क्षितिपतिः । उपपत्तिभिः स्वस्मिन्नामयस्यानाशकत्वोपपादिकाभिर्युक्तिभिः । सुदृढदृढः सुदृढादपिदृढः । एतमेतम् आगतमिमम् । अभिनिवेशात् आग्रहात् । द्विरदपोगजराजः, यादवानां वनंसमूहस्तदेव वनंकाननं तस्यामोदी । सूत्राम्णः इन्द्रात् । भावकः भापकः ॥

प्रभो ! अपनयनयनिपुणनृपतनयस्योपतापमविलम्बितम्, प्रमाणयगणकवराकभाषितम्, पालय किङ्कर प्रतिष्ठाम्, इत्येवमभिस्तुत्यप्रार्थमानोनारायण चरणकरुणयासाभिमानो भूमीपते ! एषव्रजामिभवत्सूनुविपदपनोदनायेत्युदाहरत् । राजातुतदाकर्ण्य सुप्रीततमान्तः ससम्भ्रमं परिजनाय महारजत रजत वज्रवैदूर्यादि विनिर्मितं, किर्मीरमयान्तिकविधायिदीधितिं, वानवावासमिव सुमनोमनोहरं, मखमण्डपमिव किसलयवलयलसितं, हरिचक्रमिव विच्छिन्नतमस्सुदर्शनम्, भागवतमिवकुवलयापीडान्वितं, मायिनमिवानेकरूपधारिणम्, अपार्थिवमपिचक्रवर्तिनं, गोविन्दमधिष्ठापयित्तु मानिनीषितमपिदारुकविरहितं, पुष्प रथमुपस्थापयेत्यादिक्षत् । ततोगोविन्दः नरनाथ ! नाहंवाहनमधिरोक्ष्यामि किमपीतिकृतं तदानयने-

नेतितत्प्रत्यशैत्सीत् । तथापि महीपति र्महतासंरम्भेण तमनुव्रजन् अमन्दमाहतमुरजव्रजं, झटितिझणझणाय मानझल्लीरकं, भूयोऽभिभूयमानभेरीभाङ्कारनिर्भर-भरितभुवनं, वाद्यमानढक्कापटहपटलाद्यवाद्यं, धिकृता परोद्घुरध्वानिकम्बुनिकुरम्बध्वानं, मदकलकोकिल काकलीकोमलालापिजेगीयमानवारसुन्दरीदीयमान

साभिमानः अहमवश्यं हरिकृपातोराजतनुजरुजमपनेष्यामीत्यभिमान वान् । महारजतं कनकम् । वासवावासः स्वर्गः, सुमनः पुष्पम्, सुमनाश्च देवः । तमस्तिमिरं राहुश्च, सुदर्शनं शोभनदर्शनं, सुदर्शनाभिधानं च । कुव-लयापीडः कुवलयमाला, तन्नामधेयोगजश्च । रूपं वर्णः स्वरूपंच । चक्र-वर्तिनं सार्वभौमं चक्रेणवर्तिनं च । दारुकः गोविन्दसारथिः काष्ठंच । पुष्परथं विहरणोपयोगिस्यन्दनम् । अधिरोक्ष्यामीति, तीर्थयात्राविधि-भङ्गभीत्येतिभावः, झल्लीरकः झाँझइतिभाषयाप्रथितोवाद्यविशेषः । अभि भूयमानाताड्यमाना । कम्बुनिकुरम्बं शङ्ख समूहः ।

तालतरलमणिकङ्कणं, धीरविधूयमानचमरीचामरसह-स्रं हर्षोत्कर्ष प्रसूतप्रसूनलाजानूनवर्षणं, पार्श्वद्वयो दञ्चितप्रासादस्थितकामिनी क्रियमाणनीराजनं, शत-दलतयेन्दिरैक निलयेस्वमन्दिरेसमानयत् । तप वेश्योच्छ्रित विधुधवलमहाधनासने महीपतिर्महिष्या-सम समपूपुजत । प्रणमच्च सुतेनापि तापितेन तेन

साकमसकृत्तदीयपादपाथोजानि, अधाच्चतदनुब-न्धिनीपयस्सुधामादरेण, अनन्तरं द्रागेवपश्यतो स्तयोस्सुकुमारोनृपकुमारो नीरोगतांगतोमारोपमित कलेवरोऽभ्राजत नितराम्, ततस्त्रयएवते सुषुप्तिमयी मिवस्तम्भमयीमिवावस्थामचिरमन्वभूवन् । अनुप-मप्रमोदवाष्परयाकुलाः कियत्कालकलांलेशतोऽपि किमपिनिवेदयितुं नाशकन्, अथ दयितयासनाथः क्षितिनाथश्चन्द्रमसमिव राहुवक्त्रकुहरनिष्क्रान्तं, राज श्रीसौन्दर्यमिवप्रत्यागतं, जीवलोकमहनिवहमिव, पुनरावृत्तिमुपयातं परिमुषितसर्वस्वमिव भयासात्पृथ-गादानकर्मीकृतं, तादृशं भृशं हृशातनयं विलोकयन् स्नापितः प्रीतिगिरिनदीनीरनिर्झरैः, सञ्चारितशिश-शिरोच्छ्वसित समीरणैः, अनुलिप्तः प्रसादहिम चन्दनैः, उल्लसितः सितसुमनोनवमालिकाप्रकाशैः,

शतदलतया शतभाग (कवाट) तया कमलतयाच, इन्दिरैकनिलये त-स्याः पद्मेवासादित्याशयः । सुतेनापीत्यपिनादयितापरिगृह्यते । अधा-त्, अपिवत् । तयोराज्ञोः । अन्वभूवन्निति, तेन विस्मयरसोऽव्यज्यते । सनाथः सहितः । महउत्सवः । स्नापित इत्यादि सन्तापेन पर्यहारीत्यत्रहे-तुः । तदत्रकाव्यलिंगपरिणामौ समुच्चयश्चालङ्काराः । प्रत्येकमपितापनिवारणे पर्याप्तानामनेकेषां तत्रोपादानात् । सितसुमनोनवमालिका स्वच्छशोभन-मनसां नवीनामालिका परम्परा सत्संकल्पसंहतिरितियावत्, सैवशुक्लकु-

सुमस्यनवा मौक्तिकामाल्यम् ।

आलिङ्गितस्तनुजवदनचन्द्रकिरणैः, दूरं पर्यहारि सन्तापेन । ततस्सर्वंएवतंसुचिरमतन्वतस्तुतिभिः । समातङ्गतुरंगमस्यन्दनमगणितमणिव्याकोशकोशं च राज्यमेवतस्मै समार्पिपत्, न च मानसेऽतुष्यदेतेनापि लवतोऽपि, अचकथच्च पूज्यपाद ? नियुज्यता मनवस्करशश्रववर्ति क्रीतमिदं शरीरजातम्, अयमस्मि भव दादेशःसरंशिरसावोढुं प्रतीक्षमाण इति । अथ तदशेष मेषक्षोणीभुजासमर्पितं तृणायमन्यमानः मानवेन्द्र ? कृतं ममैतेन, प्रत्युतवायु रेववैसारिणानां बन्धनायस्यात्, तथाहि सार्वजनीनैव लोभनीयता विषयकस्य, तरलताच चेतसः, आयुष्मन् ? प्रथममपि प्राकृतिक योगनिबन्धनबन्धनमशक्यमेव बाधितुं, किम्पुनर्नूतनम्, अभिवीक्षिता तुलापृषतामप्यस्पृशतीभवति भक्तिः, आकलिताच दर्शित प्रसवा सुजनतानताव्रततिः, अधिगताच निरतिशयस्य विनयशाखिनो मूल भूतामतिः, आसादिताच परमाप्रीतिः, तथापि महानुभावो विषमेऽस्य नीवृतः प्रदेशे पद्धतिं समयामयाऽनुरुध्यनिर्देशितं विशालां धर्मशालां निर्मापयतु, भूयेत येनजगदीशदर्शनायगच्छतामध्वनीनानां क्लान्तिशान्तिभिरित्युदाहरत्, राजा,बाढमिति सगद्गद्हार्दमवदत् ।

व्याकोशः दीपितः मुख्यार्थबाधात् । अनवस्कराश्रवः निर्मलाङ्गीकारः । सरं माल्यम् । मन्यमानइति, एतेन विरतिर्व्यज्यते, वागुरा आनायः, वैसारिणोमीनः, प्राकृतिकयोगः प्रधानपुरुषयोर्योगविशेषः, बन्धनं बन्धः, " ननित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते " इति कापिलसूत्रात् । तुलापृषतीं सादृश्यकणाम् , अस्पृशतीति निरुपमेतिभावः पद्धतिं समया मार्गसमीपे ।

एवमेव परिणताक्षणायमाना विभावरी, भूपतितनूद्भवशुभोदये प्रतीते चिरात्प्रतिरुद्धमपि प्रावर्तत गीतं विभासरागेणजनानाम् , अयाचन्त भोजनायजननीमर्भकाः, अदीप्यन्तप्रीत्येव मिहिकांशुकानावृतानि हरिदङ्गनानां मुखानि, वासन्तिकवासरइव प्रियनखानेकक्षता किंशुकाभिरामताऽजायतवधूवक्षोजेषु, मित्रोदयावसरेऽपि खललोकाइव म्लानिमासेदिरे कैरवकदम्बकानि, असेव्यत सौधान्तरालवर्तिनीचेतांसि तरलयन्तीहसन्तीस्वापतेयितरुणैः, बहुविधै र्विबुधप्रवोधनायताद्य मानवाद्य शब्दै रायतवाचालतांनगरम्, वैदेहकगेहधूपधूमपरिमलोऽघ्रायतनागरिकैः, मानसानीवसमाहितानां तमसानिद्रयानागृह्यन्तलोक लोचनानि, गोविन्दस्तुमनुजपतितनुजरुजमिव क्षीणामभिवीक्ष्य क्षणदां, राज्ञी मिव प्रसन्नवदनां विचिन्त्य प्राचीं सम्पादितकर्त्तव्यकृत्यनिकरोमधुमधुरयागिरास्नेह

विस्फारितेन नयनेन नृपाय प्रत्यपादयत् । कल्याणवल्ल्यालय ? अतिक्रामतिमेप्रयाणसमयः तदनुजानातुमामिति । एवमुपरतवचसि तस्मिन् पदमेतदलङ्करणीयमितिप्रक्रमप्रतीपम्, इमेजनाभृत्यभूताआजीवनाच्चरणराजीवयुगलमासेवितुं यियासन्तीति धूर्तस्येव भाषितम्, कृतार्थोभवितुमिच्छामीति स्वार्थपरायणता प्रकाशनम्,

क्षणायमानेति, प्रमोदातिशयेनाज्ञायमानयामत्वादिति भावः । प्रतिरुद्धमपीति, रोगाक्रान्तत्वान्नृपकुमारस्येति तात्पर्यम् । मित्रोदयः सूर्यप्रकाशः सुहृद्वृद्धिश्च । हसन्ती अङ्गारधानी आयसपात्रस्थनिर्धूमांगारसंहतिः, तरलयन्ती आकर्षन्ती, तथाचाप्रस्तुतयुवतिव्यवहारसमारोपात्समासोक्तिः । स्वापतेयीधनी । वैदेहकोवणिक् । अयं प्रभाते धूपेन गृहं वासयतीत्याचारः । वदनं मुखं मध्यभागश्च । कल्यं प्रभातः ।

एतेऽपिनेतव्या इत्याज्ञा, भवानेवनस्समेषां शरणमित्यभिनन्दनम्, परितापोभवन्तमन्तरेण भविष्यती त्युपालम्भनम्, भवद्भक्ता इमइत्यात्मसम्भावना, स्थितिमास्थायसंविधेयमितिताटस्थ्यम्, तदेव मीहितमप्यंनीशोऽस्मि निवेदयितुमितिप्राज्ञाय विज्ञाप्यतूष्णीं वभूव भूपतिः । ततोऽसावियदमीय वदन वैदग्ध्यमुग्धो दुग्धोदधिफेन पुञ्ज धवलं सप्रेमानुवन्धमभ्यधात्, धरणिपते ? अनुशास्तुवसुन्धराम्, रञ्जयतु प्रजाम्,

नियमयतु कुमार्गगान्, सत्करोतु साधून्, आराधयतु भगवत्पदारविन्दम्, प्रसाधयतुपद्धतिं धर्मस्य, दीपयतु मर्यादा मन्ववायस्य, नन्वयमेवकरणीयो भवादृशानामिति। अथ पार्थिवस्तथेत्यभिधायस्यन्दनाय प्रतीहारिणं समादिशत्। अनन्तरं गोविन्दः न चास्तिमेप्रयोजनं तीर्थयात्रानुपयोगिनास्यन्दनेन, तत्पादाभ्यामेव यानायानुजानातुमाम्, तौहि सफल जन्मतां नेतुमभिलषामि, नहिकर्तुमिहसाम्प्रत मभिनिवेशस्साम्प्रतमित्यब्रवीत्। ततोऽङ्घ्रिप्रसेवाविरह भयविहस्तीकृतेनराज्ञा कथमप्यनुज्ञातः प्रस्थानमकार्षीत्। कृच्छ्रेणच स्वार्पितवाष्पाम्बुपूरपूरितलोचनान् स्वमहातुकामान् महीभृत्प्रभृतीननुगच्छतोन्यवर्तयत्, अप्रहितैरपितदीयहृदयैस्समं निरक्रमतनगरात्। तेचनयनायनमतियान्त माकलयन्तोऽपि गोविन्दं तामाशामाशाभिर्दरदर्शनस्याभिवीक्षमाणाः कथं कथमपि निलयमागत्याधियामिनि नलेभिरेनिद्रां लेशतोऽपि, अनुचिन्तयदेवतस्यानुभावं विस्मयतेस्म मानसमधीशाम्, कृत्स्नाँश्चतस्यकथाभिरेवमनोविनोद-

यतः पर्याकुलयांबभूव विलोकनं गोचरयन्तीनकुण्ठा उत्कण्ठा । राजातुयथोक्तां धर्मशालामकल्पयदल्पतमेनसमयेन याचगोविन्दसत्रनाम्ना समाम्नातासुचिरमदधतोपकारदक्षतां दक्षिणाध्वगानामिति ॥

इति मैथिलश्रोत्रिय श्रीवालकृष्णमिश्रविरचिते

श्री लक्ष्मीश्वरीचरिते द्वितीय उच्छ्वासः ॥

आस्थाय विज्ञाय । साम्प्रतं युक्तम्, सांप्रतं, सम्प्रति । अभिनिवेशआग्रहः । विहस्तीकृतः व्याकुलीकृतः । अप्रहितैः अप्रेषितैः स्वयमेवगतैरितियावत्, तेन गोविन्दविषयिणीरतिस्तेषु व्यज्यते । नयनायनं नेत्रमार्गम् । तामाशाम् तां दिशम् । नकुण्ठा पूर्णा ॥ इति द्वितीयोच्छ्वासटिप्पणी ॥



## तृतीय उच्छ्वासः ।

वहुकालादाकलितं सङ्कल्पितनियमबन्धनंयद्यत् ।
सम्पादयति दयातो भगवान् तद्भक्तवत्सलो नित्यम्॥१॥

अथ पृथग्विधान् नगनगर संवसथान्, चित्राणि च काननानि, कलनेनापि कायकम्पनकारिणीश्च कल्लोलिनीः, नयनप्रसादनतामुपेयिवांसि परमपावन पयांसि च सरांसि समतिक्रामन्, नवीनहैयङ्गवीनेनाच्युतनियमेनाच्युतापचेतानियतिप्रहितचेताअसौ प्रणयाभिमानिन्यामिवांशुमतासमंनीयमानायां वासरसुषमायां, वासकसज्जिकास्विवस्मयमानवदनद्युतिषु कुमुद्वतीषु, लक्षितललनायामिवलक्ष्यमाणानेकावलोकनमुदितायां गगनपद्धतौ, प्रोषितपतियोषितीवदर्शितरागायां ककुभि प्रतीच्याम्, पावक परितापितायःपिण्डइव, आलक्तकच्छदइव, वन्धुजीवकप्रसूनइव, पश्चिमाचलशयित महाभुजगभोग रत्नइव, हाटकताटङ्कइव सन्ध्यायाः, सुन्दरसिन्दूर विन्दाविववरुणाङ्गनायाः, प्रतिभाति भानुमति, वारनारीमिव प्राचीमसाचीकृतवदनमाचुम्बितांकरेणसमालिंगति मेदुरानुरागेचन्द्रमसि, दुरन्तप्रान्तराभ्यन्तरस्थ

श्रीः। बहुकालेति, आकलितम् आचरितम् । एतेन स्थलविशेषे दुरासदेनापि नवनीतेन भगवदर्चन नियमस्यपूर्तिस्संजाता गोविन्दस्येति सूचितम् । विशेषेवक्तव्ये सामान्यस्योक्त्याऽप्रस्तुतप्रशंसा, भक्तवत्सलत्व स्यवाक्यार्थनिष्पादकतयाकाव्यलिङ्गं चालङ्कारः, यद्वा सम्पादनयोग्यत्व रूपव्यङ्ग्यद्वारा तस्यतथात्वेपरिकरइति । नगः पर्वतः पादपश्च, सं वसथोग्रामः, कलनेन दर्शनेन हैयङ्गवीनेन नवनीतेन, अच्युतनियमेन, न च्युतः नियमोयस्यतेन, अच्युतापचेताहरिपूजकः, नियतिः नियमः, प्रणयाभिमानिनी प्रेमगर्विंतानायिका, अंशुमतासूर्येण, लक्षितललना, प्रकटपरपुरुषस्नेहापरकीयायोषित्, लक्ष्यमाण मनेकस्य सूर्यस्य चन्द्रस्य च, अन्यत्र नायकस्य, अवलोकनेन मुदितं प्रकाशोहर्षोवा यस्या स्तस्या मित्यर्थः । दर्शितः रागोरक्तिमा अनुरागो वा अभिलाषस्मृति चिन्तागुण कथनोद्वेगसंप्रलापादिनाययातस्याम् । ककुभिदिशायाम् । वरुणाङ्गनायाः पश्चिमदिशः । असाचीकृतवदनम्, असाचीकृतं नतिर्यक्कृतं वदनं मध्यो मुखंच यस्मिन्तदितिचुम्बनक्रियाविशेषणम् । करेणकिरणेनहस्तेनच

मप्रथितप्रथंकमप्यवसथंपथसवेशावस्थितं विलोकय तत्रैव रात्रिमतिवाहयितुं चेतश्चकार । गत्वा च तत्रच्छायासच्छायानोकहतले परिसमापितसायन्त तकृत्यसंहतिस्सुखमुपाससाद निद्राम् । अथासोढ क्लेशखिद्यमानवियोगिगणवितीर्णशापपरिणति राजयक्ष्मा स्कन्दितायामिव क्रमेणक्षीणतामुपगच्छन्त्यां यामवत्याम्, अनन्तपुटभेदनराज्यशासनं निज

वाजिवाहकोदय निशकृतारातितिमिरे चिकीर्षति विकर्तने प्रावर्ततकर्तव्येषु प्रात्यहिकेषु, उपस्थायच प्रथमसन्ध्यां भगवत्पादाम्बुजसवनीयनवनीतसम्पत्तये तदवनीवासिनस्समस्तान् कुत्रलभ्यतेक्षीशमित्यपृच्छत् । तैश्च नैतामध्यास्तेमहींमाहेयीमहिषी वा दूरे च तदित्यभिहितोनियमभङ्गभयानुवन्धिवाधनोदन्वति निमज्जन् नचिरादनुचरेणसमाहृतं तदवलोक्याश्चर्यचकितचेताः कथमिवैतदासादितन्त्वयेति दासमन्वयुंक्त । ततस्तस्मात् "सौरभेयीग्रामं ग्रामं निकषा गोपायमानेन विमलतरनीरसरसीसनीडे, नूतनतरुणतारम्भ सम्भावितेन, कौङ्कुमविशेषक विशेषित विशालभालेन, अलिकुलानुकूलातिललामकाननकुसुममालाकलितोरु मौक्तिकसारहारभारप्रतिभासित वक्षस्थलेन, कोकनदानुकारिकरचरणकमनीयेन, भ्रमरकभ्राजित वक्त्राम्भोरुहेण, कमलरागकृत मकराकृतिकर्णकुण्डलकान्ति निराकृत कामकेतु कौतुकेन, चूर्णित वर्णमानचञ्चलाधिवासितवसनेन,

अप्रथितप्रथम्, अविदितनामधेयकम् । अवसथंग्रामम्, सवेशोऽन्तिकः । छायासच्छायः छाययासतीच्छायाकान्तिर्यस्यसः । यामवत्यां निशायाम्, भवतिच राजयक्ष्मामये क्षयः क्रमेणाङ्गस्येति । अनन्तमाकाशं तदेवानन्तपुटभेदन प्रतिविस्तृतं नगरं तत्र राजपथमागनम् निज

वाजिवाहकः अरुणः, उपास्थाय उपास्य, सवनीयं पूजनसम्बन्धि, माहेयी गौः, तत् क्षीरम्, अनुबन्धिजन्यम्, बाधनोदन्वति पीडासमुद्रे, तत् क्षीरम्, अन्वयुंक्त पृष्टवान। तस्मात् दासात्, एतस्यवक्ष्यमाणेन निशम्येत्यनेनान्वयः। सौरभेयी–ग्रामंगोसमूहम्, ग्रामंनिकषा ग्रामसमीपे, सनीडे अन्तिके, विशेषकं तिलकम्, अनुकूलेति, एतेन सौगन्ध्यातिशयोव्यज्यते। कोकनदं रक्तोत्पलम्, भ्रमरकोऽलकः सएव भ्रमरको मधुपः, कमलरागः पद्मरागमणिः कर्णेति, नचैतत्पदं व्यर्थं, कर्णसंलग्नार्थकत्वात्, "कर्णावतंसादिपदे" इत्यादिना काव्यप्रकाशेतथाप्रतिपादनात्। केतुः पताका साचमदनस्य मीनमयी, चूर्णितेति, चूर्णितः तिरस्कृतः, वर्णस्य रूपस्य मानोगर्वोयस्यास्तथाभूता विद्युत् येन तत्। अधिवासितं वसनं यस्यतेनेत्यर्थः।

विलासि महीपतिकुतूहलगहनेनेव नवनीरदावली श्यामलता कान्तेन, जामदग्न्य प्रतिपाद्यमानमेदिनी तलेनेव नक्षत्रमालाच्छुरितेन, जीमूतवाहनेनेव अंगदस्थितिशोभनेन, वडिशानामिव कामिनीमनोमीनाकर्षकाणां तिमिरत्र्यणुकसञ्चयानामिव कुटिलालकानां रोचिषालिम्पतेवान्तरीक्षम्, मणिबन्धबन्धुरवलयमणिमरीचिभिः रत्नकुट्टिममिव विदधतामदेशम्, आश्विनेयादि सममनोरमनिर्माणपरिशीलनप्रयोजनेनेवकमलजन्मनः, प्रकटितमृगमदेनापि मृगमदापहारिणा, चन्द्रकरुचिचञ्चितेनापि विभाकरेण, वंशी-

वशीकृतकरसरसीरुहेण, आकरेणलावण्यसलिलानां, क्रीडैकनिकेतनेन सौन्दर्यसारसमुदयानां, सकलसुकृतपरिणाम मवसीयमानेन नयनानाम्, आसेचन केन केनचिदाभीरकिशोरेण सिस्वासोरुपागतस्य तदीयरुचिरतांचकितमाचिन्तयानस्य चिरायतत्रस्थित वतो ममाभ्यर्थनात्पुरैव झटितिस्वकीयनैचिकी मुपदुह्य मूल्येनविना समीहितादपिसनिर्वन्धमाधिकंदुग्ध मिदमदीयत,, इत्येतदानिशम्य सपदितमुद्देशमीयिवान् दासादासादितं स्वाप्नोदन्तमिव, गन्धर्वनगर मिव, ऐन्द्रजालमिव, प्रातीतिकविषयमिव, अतथाभूतमभिवीक्ष्य तं साक्षात्स्वप्रकाशापरोक्षमवच्छेदरहित

गहनेन विपिनेन, श्यामलता श्यामलस्यभावः। श्यामालताच। प्रतिपाद्यमानं दीप्यमानम्, नक्षत्रमालया सप्तविंशतिसंख्याकगुटिकावलितस्रजा छुरि तेन दीप्तेन, क्षत्राणां क्षत्रियाणां मालयाप रम्परयानच्छुरितेनव्याप्तेन-च, अङ्गदस्यकेयूरस्यस्थित्या अत्रस्थानेन अङ्गंद्यतिखण्डयाति अंगदासाचासौ स्थितिर्मर्यादातयामनोरमेण। वड़िशानां वन्सीतिमैथिलभाषया विश्रुतानां मत्स्यमुखवेधकानाम्, मणिवन्धः करपूर्वभागः, वन्धुरः सुन्दरः, कमलजन्मनोवेधसः। मृगमदः कस्तुरिका। मृगस्य नयनदीर्घत्वाभिपानश्च। चन्द्रकः चन्द्रः। मयूरपिच्छस्थितचन्द्राकृतिमण्डलंच, विभाकरः सूर्यः विशिष्टरीतेराकरश्च। परिणाममिति ज्ञानक्रियाविशेषणम्।

आसेचनकेन " तदासेचनकं तृप्तेर्नास्त्यन्तोयस्यदर्शनात् " इत्येतत्प्रतिपादितेन । नैचिकी गवामुत्तमागौः, भनिर्बन्धं साग्रहम्, ईयिवान गतवान गन्धर्वनगरं मायानिर्मितं नगरम्, प्रातीतिकविषयं नैयायिकानभ्युपगतानिर्वचनीयख्यातिविषयीभूतंरजतादि । अतथाभूतम् उत्तरकालिक बाधज्ञानविषयीभूतम् ।

मविद्ययानवच्छिन्न मानन्दमयमध्यासितभव मभवमपिशास्त्रप्रकाशितं, मायाधिष्ठानमपि सर्ववेदिनं मनोऽमेयमपि मनसैवदर्शनीयं, भक्तानुकम्पाकलित श्रीकृष्णकलेवरं समवधारयन्, तदीयगुणगणगरिमसमज्ञामगायन्निशम् । ततो विधेय ! अहोतव सकल लोकावधेयं भागधेयम्, आतृप्ति निपीत ममृतामृतं लोचनपुटेन, दृष्टाच परमारमासीमारामणीयकस्य, अद्यत्वे तवावसितप्रयोजनंजननं यत्र नयनयो रतिथिभावमभजतयोगाभ्यास गमितजन्मभिर्यमिभि रपिदुरा सदावलोकनोदेवकीनन्दनइत्यादिभृशंदासं प्राशंसत् । एवं तत्प्रदेशादागत्याकस्मान्नीतेननवनीतेन स्थेम्नासाहितेनप्रेम्णा परेण भगवतः समातनुत पूजाम् । अथततः कतिपयेन वासरेण पुरी भूरीकृतावतारां जगदीश्वेरण, दूरीभूतविधिप्रवृत्तितयाधुरीणां

श्रेयसीषुनगरीषु, सह्याख्यामिव तालमालातिलसितां, मखमहमहीमिव कदलीवनमण्डितां, चक्रवाकचक्रवालोपेतैः, कादम्बरमणीरमणीयैः,

स्वप्रकाशेति, स्वप्रकाशप्रत्यक्षात्मकं मित्यर्थः; अवच्छेदःपरिच्छेदोदेशादिना, एतेन नित्यत्वं व्यापकत्वंचदर्शितंभवति 'आनन्दमयमिति, तत्त्वंच "आनन्द मयोऽभ्यासात्"इत्यादि सूत्रैः प्रत्यपादि वादरायणेन वेदान्तदर्शने । अध्यासितः सन्घट इत्यादि सद्विशेष्यकप्रतीत्याप्रकारीभूतः भवः संसारोयत्रतम्, अभवमपि अजन्यमपि शास्त्रेण उपनिषदा प्रकाशितम् उत्पन्नं ज्ञापितंवा, मायेति इहविरोधः स्फुटएव । मायिनोऽसर्वज्ञत्वात् जीववत्, परिहारस्तु आवरणशक्तिविशिष्टमायाधिकरणत्वं ब्रह्मणि नोपगम्यते विशिष्टाधिकरण तायाः विलक्षणत्वात् तथाच सर्ववेदित्वोपपत्तिः । मनोऽमेयमपि "अवाङ्मनस गोचर" मितिश्रुतेः, इहापिस्पष्टएवविरोधः, परीहारस्तु उक्तश्रुतौ मनः पदम-संस्कृत मनः परम्, "मनसैवानुद्रष्टव्यम्" इति श्रुतिविरोधात्, मनसैव श्रवणमननादिना संस्कृतेन मनसैवेति । आकलितः गृहीतः, समज्ञां कीर्तिम् । अवधेयं सुश्रूषितव्यम्, अमृतामृतम् अमृतादप्यमृतं सुधाधिक मितियावत् । अवसितं प्राप्तम्, विधिप्रवृत्तिरदृष्टोत्पत्तिः जगन्नाथपुरीगमनेन जीवन्मुक्तता भवतीतिभावः । तालमाला तालवृक्षस्य करध्वनेर्वा परम्परा, सह्याख्यायां करध्वनिरिति नव्यसभ्यानामाचारः । कदलीवनं रम्भावनं पताकानिवहश्च चक्रवालं मण्डलम्, कादम्बः कलहंसः ।

रोलम्बकदम्बकावलम्बिताम्बुजनिकुरम्बस्यन्दमानम-

करन्दसुरभीकृत स्वादुसलिलैः, निःश्रेयस निश्रेणिकाभिरिव सोपानश्रेणीभिरभिराजितैः, मानवमिषेण जगन्नाथदर्शनार्थ मायातै स्त्रिदशैरिवजनै रवगाह्यमानैः, सरोभिरुपशोभिताम्, विपिनपालपालिपीयमाननारिकेलमधुररसैः, अध्वगशतदीयमानक्रमुकखर्जूरादिस्फुरत्स्फीतफलैः, अलिकुलकोलाहलव्याकुलैः एलालताप्रसूनपरिमलविलुब्ध गन्धवाहनिषेवितै रारामनिकरैः प्रियदर्शनां, पिङ्गलसुभाषितैरिव सद्वंशस्थैः क्षमान्वितैश्च, मैथिलैरिव विद्योपासकैः आगम रहस्यकुशलैश्च, सत्कविपद्यबन्धैरिव विशदचरणैर्मृदुल मधुरैश्च द्विजैराकीर्णामशिश्रियत्। तत्र च यथाविधि आम्नायस्येव षडङ्गसङ्गतस्य, रवेरिवकमलानन्दनस्य चैत्ररथस्येव सुमनसांसमवाये रासेव्यमानस्य देवस्य दर्शनादनैषीत्कृतकृत्यतामात्मानम् । तत एतदायनात्पुरैव "योऽसौ मैथिल द्विजन्मोगोविन्दनामा कामाभिरामाकृतिः कृतिकुलललामाति धवलयशोधामात्र त्रियामानन्तरं निरतिशयभक्तिभूम्ना मामालोकयितुमागन्ता, स च सार्द्धमेवानल धौतमलकलधौतप्रतिमधौत युगलेनास्मदीयनैवेद्यं निवेद्य सद्यः प्रसाद्य सभाजयितव्यः व्यपदेष्टव्यश्चास्माकीनयागिरा

निश्रेणिका सोपानम्, इयमुत्प्रेक्षा, एवमग्रेऽपि, त्रिदशैरिवेति इयमुत्प्रेक्षा सापह्नवेति विच्छित्तिविशेषः । अध्वगशतर्दीयमानं पथिकशताय वितीर्यमाणं तस्यशतेनखण्डयमानं वा । पिङ्गलसुभाषितैः पिङ्गलनागप्रणीत च्छन्दो निबन्धैः, सद्वंशस्थैः समीचीनकुलवर्तिभिः वंशस्थेन च्छन्दसाऽन्वितैश्च, क्षमाशान्तिः तदभिधानं छन्दश्च । विद्याशास्त्रं कालिकादिभंगवती च, आगमोवेदश्शास्त्रं तन्त्रंच, विशदचरणैः पवित्राचरणैः निर्दोष पादैश्च, षडङ्गानि सर्वज्ञता तृप्त्यनादिबोधादीनि शिक्षाकल्पव्याकरणादीनिच । कमलानन्दनस्य कमलायालक्ष्म्या कमलस्य पद्मस्यवाऽऽनन्दनस्य सुखदस्य विकाशकस्यच । चैत्ररथः कुवेरोद्यानम्, सुमनसां साधूनां पुष्पाणां देवानां च । आयनात् आगमनात् । कलधौतं सुवर्णम्, सभाजयितव्यः पूजनीयः ।

तेन तत्सन्ततिसन्तानैश्च नागमनक्लेशो विधेयः, अत्रिहितास्मदी यवदनदर्शनैरपितै नोनवाप्तं स्यात्तदुद्भवं तदेककस्य समागमेनसुकृतम्" इति स्वप्नमाप्नुवानोऽस्वप्नदेशीयतां दधानो देवसेवनैक परायणस्सकलागमगहन गाहन मृगनायको विप्रगणनीयो विप्रः क्षिप्रं निरीक्ष्य गवेषणेन पौरस्त्यक्षणदावलोकित स्वप्न निरूपित स्वरूपाय तस्मै सम मुद्गमनीययुग्मेन भगवते निवेदितं नैवेद्यं सादर मुपाहरत् । अश्रावयच्च स्वप्नासादित मुदन्तजातम्, सच केनाप्यलब्ध मसाधारण मतिप्रमदेन देवस्यान्वितं प्रसादेन निर्देशितं मूर्ध्ना प्रणम्याग्रहीत्, अमन्यत च धन्यतमम-

न्यमेवात्मानम्, अवसच्च जगदीशं सेवमानश्चिरा-य, अकरोच्च नवसंस्तवसमेधित मुदितान् सकला-नेवोत्कलीयान्, अनैषीच्च व्याकोशकोशतामदसीय हृदय सरसीरुहाणि, ततोऽतीतेषु गणरात्रेषु कृतनिर्ण-यः प्रयाणाय विधायच यथारुचि तदुचितानि कर्तव्यानि, समानन्दितदेवसेवकोऽसकृन्नमस्कृत्य-नारायणं, संयाच्य चाचला मनुरति मयनातिथीच-कारचरणौ । अथ यदृच्छयाऽऽगच्छन् अभिवीक्ष्य श्रीसाक्षिगोपालपादपाथोज माहततरस्तत्रत्यै र्जन-समुदयैः, हृषितहृदयः, तत्तत्प्रदेशजनिजुषो विषय-विशेषान् प्रतिलोचने प्रेषयन्, नगरइव सदिन्दु चन्दन विन्दुसरसाऽभिनन्दिते, अपत्यप्रदपानपयो-मरीचिकुण्डमण्डिते शमनाशावस्थितेऽपि उदयाच-लान्तिकतरे, लक्षितलक्षाधिकमन्दिरे पदे प्रतिष्ठितं स्मरजित्वरं श्रीभुवनेश्वरं व्यलोकयत् ।

अस्वप्रदेशीयतां देवसादृश्यमितियावत् । विप्रगणनीयः विशेषेणप्र-कृष्टतयागणनीयः विप्रेषुगणनीयोवा उद्गमनीयं धौतवस्त्रम्, असाधारणत्वे केनाप्यलब्धत्वंहेतुः, अन्यमेवलोकोत्तरमेव, लोकेषुकेनापिताहृशप्रसादस्या प्राप्तत्वात् । संस्तवः परिचयः । गणरात्रेषुवह्वीषुनिशासु । समानन्दितेति, द्रविण दानादिनेतिभावः । अयनं मार्गः, सदिन्दुचन्दनेति, शोभनचन्द्र चन्दनयोरुपेततया सहशेन विन्दुसरसा विन्दुसरोवरेण, शोभनेन्दुसदृशः

चन्दनस्यविन्दुर्यत्र तादृसेन सरसेन रसिकजनेनचाभिनन्दितइत्यर्थः। अपत्येति, अपत्यप्रदं पानंयस्य तथाभूतंपयोयत्र तेन मरीचिकुण्डेनमण्डित इत्यर्थः शमनाशा यमस्यतृणा दक्षिणदिशाच, उदयाचलः अचलसन्निभा वृद्धिः। सूर्योदय पर्वतः उदयाचलनामधेयस्तत्प्रान्तेस्थितोगिरिश्च ।

तत्रच कियन्ति वासराणि शङ्करसमाराधनेनातिवाह्य वाह्यातिकीर्तितकीर्तिः सुप्रीतचेता अलञ्चकार-जनेश्वरशायायिनींसरणिम् । एवमासन्नानित्रिदश-सदनानि पावनवनवाहिनीश्च तटिनी स्सम्भावयन् चिररात्रायाक्रान्तकलेवरश्शान्तस्वान्तो निमीलद्दल-नलिन निलयान्विहाय तन्मधुनि पानप्रमत्तभ्रमद्भ्र-मर प्रकर विरुतनान्दी समारभ्यमाणे चित्रे मदनना-टके, उपपते रिव कलाकरस्यकरसम्पर्कलवेनापिसङ्को-च मञ्चन्तीषु रविकामिनीषु कमलिनीषु, चिरवि-युक्तकुमुदिनीप्रेमाणमिवकौङ्कुमरागकैतवेन धारयति कुमुदिनीनायके, नितान्तमलिनच्छायतां शनैरुपग-च्छति नववधूवदनपङ्कजे, निशादौ निशान्त माज-गाम। दूरादेवदृष्टमात्रेतस्मिन् सुचिर विलोकनाद-भिनवीभूतेनेव प्रणयपुञ्जेनातीवविकुर्वाणान् सर्वा-नेव वाष्प सलिलासार शोभितास्यसारसान् सम्भूया-वस्थितान् निसर्गानुराग शालिनो वन्धुवर्गान्यथाक्रमं प्राणाधिकान् आप्तान् प्राप्यतत्र कतिपयैन तेषाम्,

समालिङ्गयतचाङ्गेषु सकलै रुत्कलिकाऽतिविकलैः, अथससम्भ्रम प्रधावितविधेयजनाधीयमान मासन-मुपाविशदासीनेषु गुरुजनेषु, अपृच्छयतच कुशलं-तैः, अजिज्ञासतच प्रत्येक मनामयं कनीयसाम्, ततोऽति दुरासद तीर्थागत निजजनो

जनेश्वराशा उत्तरदिशा । वनं जलम्, तटिनीः नदीः; 'निमील दिति, पिधीयमानकवाटे शौण्डिकालयेसति मद्यपास्ततो निः क्राम्यन्तीति वस्तु-स्थितिः, नलिनमेव निलयः, चिन्नइति, मधुपान प्रमत्तस्य नान्दीपाठकृ-त्वादितिभावः । उपपतेः जारस्य । पङ्कजइति, युक्तमेवैतत् पङ्कजस्य सन्ध्यायां क्रमेणमलिनच्छायतेति । निशान्त भिति सदनार्थकम्, एवंच विरोधा भासालङ्कारो व्यज्यते, निशादौ निशाया अन्तस्य प्राप्त्यसम्भवेन विरोधस्यापातवतः प्रतीतेः । विकुर्वाणान् हृष्टमानसान । उत्कलिकेति, आलिङ्गनस्येत्याशयः । आधीयमानं दीयमानम् । तैः गुरुजनैः ।

चितार्चादिसत्कारं विन्दन्नतितरामनन्दत । विज्ञातभा-वुकै स्तैरनुयुक्तो विषमतमसृति प्रवृत्ति मादितः क्रमेण कृत्स्नामेव न्यवेदयत् । तदुदन्तसन्ततिश्रवणाहित-विस्मयास्तेमुदं परमामुपागमन्, अभ्युदैरयँश्च तन्म-हानुभावताया निवेदकानिवचनानि, कर्णाकर्णिकयाच तावार्ता विश्रुतता मयासिषु जगतीतलेषु, अवर्धत-चबहुविधातस्य कार्तिकराकाकला करकल्पा कीर्तिल-तिका, प्रतिव्यधत्तच गिरिगणगुरोर्गरि माणं तदीय

माहात्म्यम्, येऽत्रतस्यतनया विद्यापति दामोदर राम-नाथ देवनाथ गोपीनाथ मधुसूदन जनार्दना भिधा-नो, दवीयसीमपि महामहोपाध्याय पदवीं दधाना, अपाकृत भूमण्डलपण्डिताभिमाना, असमानसम्मा-ना, विकाशित भुवनाननलिनकानना, दीपिता भिजनाः, प्रसन्ना, गुणसौरभलोभनिपतदस्तोक लोक-मनोमधुपगणा, धीधनचणा, धिक्कृतधिषण धीर-धिषणाः, सरसपेशलसत्यभाषणा, नवनवोद्यद्विशद्य-मानसद्यशसः, विदितसर्वदिव्यविद्याः, संसद्यनन्य-तुलितहृद्यानवद्य गद्यपद्यवैशद्यविद्योतितभारतीकाः, द्युमणिद्युतयः, सदाश्रवाः, श्रितश्रौतकृत्याः, परपरीवा दपराचीनचेतसः वाग्मिनः, हरिचरिताकलनकौतु-किनः, नयोपनिषद्दूरदर्शिनः, रमणीय परस्परप्रेमशा लिनः, न्यायवादिनः, सोमपीथिनस्समासन्,तेऽपि पितुः प्रभावं प्रतिपद्य परां प्रसन्नतां प्रापन्

सत्कारमिति, दूर्वाक्षतादिग्रहणमित्यर्थः । भावुकैः कुशलैः, प्रतिव्य-थयनिराकरोत् । असमानम् अनुपमम्, धिषणः सुरगुरुः, उद्यद्विशद्य-मानेत्यत्र कार्यकारण पौर्वापर्यविपर्ययलक्षणाऽतिशयोक्तिः । सदाश्रवाः सत्यप्रतिज्ञाः सतां वचनेस्थिताश्च । उपनिषत् रहस्यम्, सोमपीथिनः सोमयाजिनः ।

तेषां महिमाश्रवणः प्रोच्चातिचारुचावचन्यायवचो-

गोचरोचित प्रचुरचिरविचारातुल चातुरी चमत्कारच-यचकितचेतसा ऽवसायरसाभृताशाब्दानुशासनेऽर्क-स्येव कल्याणोदर्कतर्क सम्पर्क भागिविषये कर्कशम-तिशालिता मर्पितेन तर्ककानन पञ्चाननेति पदेन सनाथो गोपीनाथो निखिलप्रतिभाषिमनीषि मानमर्द नेन जनार्दनेन सार्धं मध्यापयन्तो मेधाविनोऽन्ते वा सिनोव्यशजन्त ॥ तत्रा प्रतिहत प्रतिभा प्रतिभासितो देवनाथस्तु प्रत्येकंतन्त्र मन्तरायापरतन्त्रो निरन्तर मादरेण चिरेण यथेष्ट मध्यगीष्ट, समस्तशास्त्र मपार पारावार ममथान्मतिवैभवेन मन्दरेण, यस्मादधीत्य-दवीयसोऽपि दूरदर्शिदलादर माददाना निजदेशगौ-रवोदवसितता मासेदिरे, यदालयः प्रस्थितस्यापि कोविदकथायाः पन्थान मदर्शयदिव मण्डनमिश्रम-न्दिरस्य सुषमाम्, यस्सङ्ख्यातिगान् सङ्ख्यावद्भिरपि दुरवबोधाभिधेयान् कौमुदीनामधेय प्रधानान्निबन्धा-न्निरमात्, यश्च विदुरोऽपि धृतराष्ट्रपक्षपाती, गोत्रा-मोदनावस्थोऽपि देवनाथः, कलियुगजातजन्माऽपि त्रेताश्रितः, प्रश्रितः, द्वयातिगोऽसाधारणः, स्वाहत माश्रममुचितेन सुकृतेन पालयन्,

तेषाम्, वक्तानामष्टानां,मध्ये चत्वारः, विद्यापतिमारभ्य रामनाथान्ताः, उच्चावचं नैकभेदम्, सभाभृत, राज्ञा, शालिनामित्यस्य अवसायेत्यनेन

प्राक्तनेनान्वयः । प्रतिभाषिमानः, प्रतिवादिनामभिमानः, सङ्ख्या वद्भिः बुधैः, कौमुदीति, अधिकरणकौमुदी, स्मृतिकौमुदी, साहित्य कौमुदी, मन्त्रकौमुदी प्रभृतीनित्यर्थः । विदुरः तन्नामधेयोऽर्जुनस्य सुहृत्, ज्ञाताच, धृतराष्ट्रः दुर्योधनजनकः धृतं राष्ट्रं राज्यं येनासौ धृतराष्ट्रो राजाच । गोत्रामोदनम् पर्वतानां पृथिव्याश्च प्रहर्षणम्, देवनाथः सुरेश स्तन्नामा-च । त्रेता एतदभिधानं युगम्, दक्षिण गार्हपत्याहवनीयाग्नयश्च । प्रश्रितः विनीतः, द्वयातिगः, निवृत्तरजस्तमोगुणः, असाधारणः अतुलितः

आम्नायस्मृति निदेशित मनुचरन्, विजितोन्मद मदनमालव वियोगिवनितावदनरोचिषा यशसा व-सुमतीं विभासयन्, अजीजनज्जनाना माह्लादम् ॥ एवमेव भूमिदेवतापनिषूदनो मधुसूदनोऽपि मनोर-मतयाऽवधुतमधुसखः, शैशवाकलित सकलविद्याव-दातहृदयः, सद्विचाराभिनिवेश पेशलातिमांसल मीमांसोदयः, सोदयः, जल्पनीयानल्पकल्पपर्यन्तस्था-य्यनन्यदीयकल्पकल्पनाशक्ति–सीमन्तिनीतल्पभूतः, अलक्षितप्रति पक्षरक्षणदक्षविचक्षणः, सूक्ष्मतम ( शे-मुषी ) चेतनासूचिकाभि मोचनो ग्रन्थग्रन्थि निव-हस्य, समाराधको गणाधिपस्य, पारदृश्वा विश्वाश्रि-तशास्त्रसरस्वदोघस्य, अवतारो वाग्देवतायाः, निरव-धि प्रवृद्धानन्द विभावसु विकचवदनारविन्दतां ज-नतां प्रापयन्, उपदेशादानपात्रच्छात्रसन्दोहानुपदि-

शन्, न्यक्कृत केरलकमनीयकामिनीकपोलकान्त्या कीर्त्या विशदयन् मेदिनीवलयमदीप्यततराम्। येन विरचिता अदभ्रसद्युक्तिगर्भास्सन्दर्भानचिरस्यकस्य नामापश्चिमचेतनाञ्चितस्य विपश्चितश्चेतश्चमत्कुर्वन्ति ॥ अथ स्वसजातीयवियुक्तश्वसितसम्वर्धनक्षमे वहतिमनोभवाशुशुक्षणि सन्धुक्षणदक्षे दक्षिणसमीरणे, मञ्जुलं गुञ्जति नवमञ्जुमञ्जरी रस सम्पल्लम्पटे मिलिन्दपुञ्जे, मधुरकुहूकृतं मुहु स्समालपति ललनादशनांशुकानुकारि प्रवालमालशाल रसालशालशाखावलम्बिनि तत्प्रसुतप्रसूनरसासवास्वादनो

भूमीति, एतेन मधुसूदनठक्कुरे हरे स्साहश्यमभिधामूलयाव्यञ्जन यावोध्य, भूमिदेवस्य भूमिदेवयोश्चतापनिपुदनत्वस्य साधारण धर्मत्वात् । मधुसखः कामः, अभिनिवेशः आग्रहः अभितः प्रवेशश्च, मांसलः स्फीतः, मीमांसा विचारः, सोदयः उन्नतः, अनन्यदीयकल्पा अनुपमा, अदभ्रावहुला, अञ्चितस्यपुजितस्य । स्वसजातीयेति, श्वसितदक्षिणानिलयोर्वायुत्वेनसाजात्यम्, सजातीयमुन्नमयन्तिलोका इतिवस्तुस्थितिः । आशुशुक्षणिः अग्निः, सन्धुक्षणं दीपनम्, लम्पट इति, नायकविशेषव्यवहारसमारोपाम्मिलिन्दे समासोक्तिः, दशनांशुकोऽधरः, शालेति, शोभमानेत्यर्थः । तदितिशाखार्थकम् ।

दितमुदिते समुदये पिकानाम्, ऋतुनूतन समागमजातलज्जयेव विमलायां श्रितनवपलाशवसनसितलतौ,

विरहिदेहदारणाय क्रकचइव स्फुरति केतकिच्छदे मन्मथक्षितिपतेः, पलाश कुसुमकैतवेनकृशानौस्थापिते जुहवतिपललशकलैर्वियोगिना। मागमिकेनेव ऋतु नायकेन, विकच कमलोत्करकाण्डक्रीडत्कलहंस कुल कोलाहलव्याकुले प्रतिभातिसुरभिसलिले सरसि, कान्तेन साकं कुसुमावचयकुतूहलं कलयति कदम्बके कामिनीनाम्, पञ्चमस्वरेण प्रमुदितमुद्गीयमानवसन्तरागापहृतहृदयेषु लोकेषु, वात्स्यायनविवोधितवन्ध वहुविधां निधुवनक्रीडामनिशं विदधानेषु स्मरशरकृतकम्पदम्पतिजनेषु, कामसामन्तवसन्तपाश्ययेव मल्लिकावकुलमालती मालया प्रतिवध्यमानेषु भृङ्गाटनासङ्गिनिशृङ्गाटके तरुण मानसेषु,पटवासवासितवसनवदनै र्युवजनै र्मुरजरवमनोहरमुच्चै र्गीयमानाश्लीलगीतिगाथादोहा निशमनेन विहसन्तीषु समन्ततो नागरिक सीमन्तिनीषु, प्रसूनाशुगदैवतदरिद्रता दूरीकरणदर्शितदातृभावे, वनितावयव इव कनकरुचिकम्पक चम्पकद्युति मनोरमे, पूर्वानुरागइव उत्कलिका निकरमेदुरागमे, भूपति भवनइव विकशितकाञ्चने, वेशसन्निवेशइव गणिकाशतद्रवपरायणमधुपराणे, वैद्यक

ऋतुः वसन्तः स्त्रीणांपुष्पसमयश्च, वाससीति, ऋतौ चतुर्थदिवसे नवंवासोगृह्णन्ति स्त्रिय इत्याचारः। क्रकचेक्रपत्रे, पललशकलैः मांसखण्डैः, आगमिकेन, तान्त्रिकेण, वात्स्यायनः कामशास्त्रप्रणेता, पाश्यया पाशसमूहेन, शृङ्गाटके चतुष्पथे, पटवासः आवीरकः दूरीकरणेति, पुष्पाणांप्राचुर्येणाधिकशरलाभादितिभावः, चम्पकद्युतिः चम्पकस्य तत्सदृशी वा कान्तिः, उत्कलिकेति, उत्कलिकाया उद्गतकोरकस्य उत्कण्ठाया वा निकरेणमेदुरस्सान्द्रः अगमोवृक्षोयत्र आगमोयस्येतिवा सताहृशः। काञ्चनपदं कचनारेतिभाषयाप्रथितस्य पुष्पस्य, सुवर्णस्यचबोधकम्। वेशः वेश्याजनाश्रयः, गणिका यूथिका वाराङ्गनाच, द्रवः केलिः द्रवणंच, मधुपो भ्रमरः मद्यपोव्यभिचारीच।

इव शतप्राशामोदितजने, सुन्दरीस्तनइवनवमालिका समुद्दीपिते, द्वारवतीनगर इव माधवीस्मितधवलिते, वैभातिक विलासिनीवक्षोजइव प्रियनखक्षतकिंशुकाभिरामे, केशवइव सुरोल्लासप्रकाशके, संजातरजसापि उपभोग्यया प्रसूनसंहत्या चित्रीकृते, पुष्पन्धयनिचयपरिधीयमान माधवीमधूनां दूरदर्शनादपि सद्यः प्रमाद्यतामहंयूनामपियूनामङ्गनाहैमबाहुयुग्म निगडगाढबन्धनेनाभिनन्दनीये विलसति सुरभिसमये, कदाचिदसौ देवनाथः प्रकृत्याद्यशक्तिभक्तियुक्तोगृहीत तदीयदीक्षो मन्त्रसिद्धिकामः कामाख्यागमनाय पितुः पादपद्मेषु प्रार्थयांबभूव। सचजगतीसङ्गीत

कीर्तिस्स्वसङ्गिनमङ्गीचकारतङ्गमयितुम्, ततो देवनाथस्तदधिगम्य सुप्रीतमानसः प्रयाण समयं प्रतीक्षमाणस्तस्थौ ।

इति मैथिल श्रोत्रिय श्रीबालकृष्णमिश्र विरचिते
लक्ष्मीश्वरी चरिते तृतीयउच्छवासः ॥

शतमाशः करवीरो भैषज्यंच, आमोदितः सुगन्धिविशेषंप्रापितः आमयनिराकरणेन हर्षितश्च । नवमालिका सप्तला नवीनामालाच, माधवी स्मितं वासन्तिका विकाशः माधवस्त्रीहसितंच । नखक्षतेति, इष्टविशेष्य विशेषणभाववैपरीत्यात्साधारणधर्मत्वं बोध्यम् । सुरोल्लासः उल्लसितं मद्यं देवोल्लासश्च, प्रकाशके जनके, रजः स्त्रीणा मार्तवं परागश्च, चित्रीकृते किर्मीरिते विस्मयविषयीकृतेच । पुष्पन्धयोभ्रमरः, धीयमानं पीयमानम्, अहंयुनाम् अहङ्कारवताम्, अभिनन्दनीयइति, प्रमत्तस्यशृंखलयाबन्धनादितिभावः, सुरभिः वसन्तः, आद्यशक्तिर्भगवती, स्वसङ्गिनमिति, नत्वेकाकिनमितिवात्सल्यं व्यज्यत इति ॥

इति तृतीयोच्छ्वास टिप्पणी ॥



# ❀ अथ चतुर्थोच्छ्वासः ❀

अनवगत नरेंद्रभावं किमिमंजन मीहसेपराभवितुम् ।
सोऽयमनन्यसदृक्षोऽवहितो जागर्तिजिह्मगब्रात ॥१॥

अथामरतरङ्गिणीप्रवाहइव हरिपदपरिच्युते, निपीतासवइव गलितांशुके. अधोनिपतितेच, निशानायके, पुष्कराकारकाशोदरेषु संयमितानुदयादेवचञ्चरीकनिचयानचिरेण मोचयितरि, मयूषमालामयेऽपि कौशिककुलान्धकारकारके, मित्रेऽपि कोकशोकपरिपन्थितामुपगते पुरुहूतवधू पारिजातप्रसूनइव, लोकालोकलोचनइव, गगनाङ्गणरत्नप्रदीपकइव, दृक्पथमवतीर्णे विभाकरे, कृतापचितिकृत्यः शुभेऽहनि प्रदक्षिणं ज्वलतिभव्ये हव्यवाहने, शिशिरसौमनसामोदनोदने वहत्यनुकूलेपवमाने, प्रसन्नाननासु आशासु, पुरस्ताच्चरति धृतधवलपीवरपयोधरे धेनुमण्डले, परिलसति श्रुतिपारयायिनि विश्रुते श्रोत्रियगणे कनककलसप्रतीकाशकुचयुगलविनतायामग्रतः स्थितायां दिव्यवनितायामसौ गोविन्दः प्रकामंकामाख्यां कामप्रतिमानेन सानन्द ममन्देहेन समंदेवनाथेन प्रतस्थे । गत्वाच कियतिदूरे सविशेषभीषणस्रोतोभिरतुलां, प्रोषित भर्तृकामिवोर्मि

श्रीः । नरेन्द्रः विषवैद्यो राजाच, सदृक्षः सदृशः अवहितः सावधानः,

जिह्मगः सर्पः कुटिलजनश्च, अप्रस्तुत प्रशंसालङ्कारः अप्रस्तुतेनसर्पनरेन्द्रवृत्तान्तेन प्रस्तुतस्यबङ्गदेशीयमान्त्रिकगोविन्दवृत्तान्तस्य वक्ष्यमाणस्यध्वननात् । हरिपदमाकाशः विष्णोश्चरणश्च, अंशुकः किरणोवसनञ्च, पुष्कराकारकारा कमलस्वरूपबन्धनालयः, संयमितान्, बद्धान्, मोचयितरीतितृनन्तं, तेननकर्मणः षष्ठ्याः प्रसक्तिः । अन्योऽपिराजास्वत्युदयेकारागारात् बद्धान् मोचयतीतिवस्तुस्थितिः । मयूखेति, विधिवशाद्विरोधवरीहारः । मित्रे सुहृदि तन्नामधेयेच, पुरहूतवधू प्राची, लोकालोकः सप्तद्वीपवतीभूमिः, नोदनेप्रापके, प्रतीकाशः सदृशः, दिव्या उत्तमा, एतैश्च शकुनैः भविष्यन्तीप्रयाणसंसिद्धिः सूचिता । प्रतिमानेन प्रतिकृतिना सदृशेनेवियावत् । अमन्देहेन उत्कटेच्छावता. ऊर्मिस्तरङ्गः उत्कण्ठाच, ।

मालाकुलां, सदध्येतृप्रकृतिमिवदर्शितावर्तां, वाग्देवतामिव पाठीन शालाश्रितां, यमिमनोवृत्तिमिव असकृदाकलितनक्रां, भोज्यभवनभूमिमिवविविधाहार सम्भृतां, क्वचित् सरसीरुहवनीमिव तरणि विलसितां क्वचित दण्डकामिवागाधकबन्धां, क्वचित् द्रुमशाखामिवोत्तानपुष्करां, राजन्यस्यापि केवलेन तपोबलेन ब्रह्मर्षितां गतवतो नूतनविधे त्रिशंकुशोकवारिधिवहित्रस्य विश्वामित्रस्य भगिनीं भगवतीं कौशिकीं ददर्श । तत्रच विहितस्नानादिकृत्यः कतिपयेनवासरेणसरणिक्रमेण प्रवणीकरणोच्चाटनादिपटलपरिपाटी पाटवित चाटुतररटितजनसंकटं, वाटनिकटवर्तिवाटिकाघटित मनोरमकमलाकरकणकसमपरिमलमयासो-

दि मलयमारुतान्दोलित मिलितमिलिन्दवृन्दमालती व्रततिनिकेतनान्तिकसञ्चरमाणचाम्पेयरुचिरुचिरतनु लताभिर्मृगलोचनाभिः चीनमेचकसिचयाञ्चित प्रकटितप्रायस्तनगिरीशावलम्बि बन्धनातिविभ्यत्कुन्तल भुजङ्गमसंयमनच्छद्मदूरीकृतदुकूल त्रिवलिबाहुमूल दर्शनेन वशीकृतैः, कटाक्षविशिखनि क्षेपणेनवेधित हृदयैरध्वगसमुदयैस्सङ्कटं, तपनीयकान्त्याऽपिश्याम- या प्रमदया, विभक्तेनाप्यपृथग्जनेन

माला परम्परा । आवर्तः अम्भसांभ्रमः, शास्त्राद्यावृत्तिश्च । पाठीन शालाश्रितां पाठीनशालाभ्यां मत्स्यविशेषाभ्यामाश्रितां पाठकजनागारमा- श्रितांच आकलितः दृष्टोविषयीकृतश्च । नक्रस्तदभिधानो जलचरविशेषः नासागूंचनक्रम् "नासाग्रेचित्तम्बित्" इतिहि पातञ्जलसूत्रम् । अवहारो ग्राहः शर्करादिस्वादूकृतं भक्षणीयञ्च । तरणिः नौकादिवाकरश्च । दण्ड कादण्डकारण्यम् , अगाधकबन्धां गम्भीरजलां स्वभ्रस्थितकबन्धाभिधदा नवांश्च । उत्तानपुष्कराम् अगभीरसलिलाम् ऊर्द्ध्वास्य शयितविहगांश्च । पटलंसमूहः, पाटवितः पटुः, चाटु प्रियम् , सङ्कटं व्याप्तम्, वाटः पथः, वाटिका उपवनम् , घटितः निर्मितः, गिरीशः हिमाचलः शिवश्च, वि- भ्यदिति, इतरोऽपिबन्धनाद्विभ्यत् शिवमवलम्बत इति, सङ्कटं दुस्तरम् , तपनीयं सुवर्णम्,श्यामया श्यामलरूपया मुग्धयौवनयाच,विभक्तेन पृथग्भू- तेन विशिष्टभक्तेनच, अपृथग्जनेन पृथग्भूतजनभिन्नेन, अपामरेणनीचेनच

जनेनचालितं, दिषमाशुगशासनैकपरवशं, प्रति निधिमिव विद्याधरपरस्य, तौर्यत्रिक निर्माणसीमान

मिव विश्वकर्मणः अध्यापनालयं कलाकलापस्य, प्रयोगधाम काम कामाख्याद्यागमाभिधेयस्य, तिलकातिललितालिकानां, यौवनमददेशितविदग्धतानां विमुग्धनैगमानां, कामकुलदेवतानां,मुक्तावलीभिरपि निषेवितोग्रकुचशालिनीनाम् अंशुकोचितकृत्यकारि चिकुरस्थितीनां, बहुविधासपत्नरत्नमालिकाच्छलेन ग्रहगणमपिवशमानयन्तीनां, वलित्रयवलिततया वैरोचनिपुरीतोप्यधिकश्रियमावहन्तीनां, स्मरणगोचरी कृतशरीरमपिस्मरं सपदितरुणयन्तीनाम्, उज्वलमतिमतीनाम्, इतस्ततोभ्रमन्तीनां, रमणीमणीनां मणिमयमञ्जुमञ्जीर शिञ्जितैर्मनोहरं. वङ्गभूमिभूषा करं नगरं समाससाद । यत्र यमः केशपाशेषु, नियमोनखक्षतेषु, आसनवन्धो निधुवनेषु, प्राणायामस्तदवसानेषु, प्रत्याहारश्चेलाञ्चलेषु, धारणा वक्षोरुहेषु, ध्यानं विटपाग्रगामिषु वलीमुखेषु, समाधिस्सुरतान्तरालेषु, वन्धनविमुक्ति

अलितं भूषितम्,शासनैकेतिएतेन राजशासनपारवश्यविरहोव्यजमानरिसद्धेरतिशयं व्यञ्जयति। तौर्यत्रिकं नृत्यगीतवाद्यम् । प्रयोगोऽनुष्ठानम्, अलिकोभालः, यौवनमददेशितेत्यनेन परोपदेशाजन्यत्वं गम्यते, नैगमानागरिका निगमवेदिनश्च । मुक्तावलीभिः मौक्तिकमालाभिः मुक्तजनपरम्पराभिश्च, उग्रकुचः उन्नतः शिवरूपोवाकुचः । अंशुकोचितेति, तेनापाङ्-

लम्बित्वं सान्द्रत्वंच चिकुरेष्वोत्यते बहुविधं नानावर्णम्, असपत्नमनुपमिमितियावत्, छलेनेति, ग्रहगणस्यापिनानावर्णत्वादितिभावः । वैरोच निर्वलिः, तरुणयन्त्वीनामिति, एतेन सौन्दर्यलावण्यातिशयोध्वन्यते, उज्ज्वलमतिः स्फीतामतिः शृङ्गारविषयिणीमतिश्च, यमः संयमनम्, नियमः एतेष्वेवान्वयवेषुदेयइति, आसनबन्धो नागपदादिः, प्रणायामः श्वासदैर्घ्यम्, श्रमादित्याशयः । तदिति, निधुवनेत्यर्थः, प्रत्याहारः प्रत्याहरणम्, धारणाग्रहणम्, वलीमुखेषु वानरेषु, सुरतेशुक्रस्तम्भायशाखाग्रगामिनः कपेश्चिन्तनस्य रतिरहस्यादावभिधानात्, समाधिर्वाह्यवृत्तिनिरोधः, सुरतेति, तदानीं प्रमोदातिशयात्तथेतिभावः ।

वसनान्तेषु, यत्रचजनसमाजेऽपि कर्णेकामिनीनां सङ्केतनिकेतनं कथयितुमिव कपोलतले प्रतिकृतिकैतवेन व्रजन्ति समुत्सुकाः कामुकाः । मलयजशकलेन चन्द्रमवचूर्णयन्तिपरिचारिका वियोगिनीनाम् । तत्राथ मभिसायमपहायनगरगर्भं स्वाभिप्रायं नाकनायकनिकायं मार्गमाणो मार्गमिलितमान्त्रिकस्तोमानुमीयमानसिद्धभावोऽभिरामेकुहचिदारामे चन्द्रिकाद्वेषविषयभूतयाऽभिख्यया नवकिसलयश्यामलकमलमालावलनजनितयेन्दिरयापरयाच शोभनं, भवपुटभेदनद्वारदर्शनद्वेषणावलोकनकवाटयुगलोपेतं, भारतव्याहृतमिव सानेकपताकशैलूषं प्रकटितेहामृगंच,

[१] चतुर तरुणा इत्यपि वा पाठः ।

नारायणमिव शङ्खचक्राञ्चितं, हरमिवविधृतत्रिशूलं काश्मीरप्रदेशमिवकामनैकसम्पादकं देवीमुपासितु मागतैरिव चित्रस्थितै स्त्रिदशनिकरैर्विराजितं, पथुरु- धिररक्ताजिरं श्रीताराममन्दिरं बिलोक्यमुदमाप्नुवन्नु पागमत् , भानुमानप्यध्वश्रमक्लान्तइवसानुमन्तमा- श्रयत् । ततोऽसौ विधिमनुरुध्यमानोऽव्यधत्त संध्यास- म्बन्धिकरणीयम् , पूजकेनद्विजेननीराजनायापावृते द्वारे समपूजयदात्मजोदवचितैरर्चनसमुचितैर्भगवती मकीटलूनैः प्रसूनैः ।

प्रतिकृतिः प्रतिबिम्बः, एतेनकपोलेवैमल्यातिशयोध्वन्यते । चन्द्रं वियोगिनीतापदायकत्वाद्विधुं कर्पूरंच, स्वाभिप्रायं स्वाभिप्रायविषयम् , नाकनायकनिकायं देवमन्दिरम् , चन्द्रिकाद्वेषविषयभूतया चन्द्रिकाधिक स्वच्छयेति यावत् , वलनंवेष्टनम् , भवेति, तन्मन्दिरकवाटं दृष्टवन्तोनपुन स्संसारमायान्तीतिभावः । भारतव्याहृतं भरतप्रणीतं नाट्यशास्त्रम् , प ताका, वैजयन्तीरूपके प्रसिद्धं पताकास्थानंच, शैलूषो विल्ववृक्षोनटश्च, ईहामृगः ईहाप्रधानोमृगः कोकः रूपकप्रभेदश्च, चक्रं यन्त्रविशेषआगम- शास्त्रप्रसिद्धः, अस्त्रविशेषश्च, ताभ्यां मध्येकरेचस्थितत्वादञ्चितम् , विधृ तेति, अभ्यन्तरे त्रिशूलधारणं बोध्यम् । कामनैकसम्पादकं कामनाया अभीष्टस्य एकं कामसदृशस्यानेकस्य पूरकं जनकंच । अजिरम् प्राङ्गणम् सानुमन्तं पर्वतम् , अपावृते उद्घाटिते, अकीटलूनैरिति कीटेनच्छिद्रित- स्यपुष्पस्य देवार्चने निषिद्धत्वस्मरणात् ।

अथ निशीथे कौतूहलिकेषु नागरिकेषु केनचि-न्मान्त्रिकेणादसीय शीलितसिद्धिशालितापरिचिती-धाकृतोच्चायन प्रणालिकया कियदुदानीयमानो देव-नाथः पाथश्रमगाढयाऽपि निद्रया भयादिव सपदि निराकृतं नयन नलिनं निशायामपि समुन्मीलयन्, ऊर्ध्वमध्वानमभ्यासमानमात्मानं कलयन्नेव केतनीकृ-तो नितान्तमातङ्केन, किङ्करीकृतो हृदयकम्पनेन, क्षेत्रीकृतो वैवर्ण्येन, विषयीकृतसकलांगसंगिना स्वे-दोदयेन आत्मसात्कृतश्चिन्ता सन्तानेन, आलि-ङ्गितो वाष्पोत्पीडेन, समञ्चितो रोमाञ्चेन, किंकर्तव्यताविमूढउन्मूढशास्त्रीयगूढविषयोऽपि क्षणमु-परिपार्श्वेऽधो दिक्षुविदिक्षु च प्राक्षिपद्विस्मृतनिमेषं चक्षुः। ततो हा तात! हा तात! नोदीक्षसे मन्दभाग धेयं तनयम्, किमेतदकस्मादुपनतं, महीतलं विहा य विहायसमायापितोऽपि अहह नासादयामि स्थि-रताम्, किन्तु केनाप्याकृष्यमाण इव कुत्रचिद्व्रजा-मि, नजाने कस्यवा कुतोवा विषममिदं विजृम्भत-म्, तदेतदपायतोऽह्नाय परित्रायतां परित्रायतामिति-तारतारै स्स्वैरचेतनेष्वपि निजवेदनावबोध माद-धानः प्रतिध्वानरूपेणोपाधिना भवनभित्तिकाऽभिलि-खित गीर्वाणगणेनाऽपि तरुणकरुणया कृतानुभाषणः

पितरं प्राबोधयत । तत एतदीयादावेदनादर्वागसौ सर्वानवद्यविबुधपतिः प्रबुद्धस्तदवस्थयायुतं सुतं समुद्वीक्ष्यविषयानिचयान् गोचरयितुमाचलन्त्या चिन्तया विनिश्चित्यवृत्तान्तमनाकुलितमना विपत्कदम्बापहारि श्रीजगदम्बायाः अविलम्बित मवलम्ब्यतां पदाम्बुज मित्युदाजहार । अनन्तर मनुष्ठितेऽपि जनयितुर्निदेशिते स्वमिवदेव्याअप्यंघ्रिकमलमुत्क्रामित मवलोक्य हन्त हन्त तारिणीचरणोऽपि चारणगणसरणि माकृष्यते, हा कष्टम्, किंकरोमि, किमाश्रयामि, कस्मैनिवेदयामि,

परिचिचीषा परिचयेच्छा, उच्चायनम् उच्चाटनम्, विहायसम् आकाशम्, अपायतोऽन्तरायतः, अह्नायशीघ्रम्, उपाधिना छद्मना, चारणगणसरणिम् आकाशम्,

कागतिः, कउपायः, किंशरणम्, अहो विसदृश परिणामिता प्रयाणशकुनानाम्, हातात ? हातात ! द्रुतमवतादित्यार्तनादं विललाप । ततो गृह्यतामेतर्हि तर्हि गोविन्दस्यैव पदाङ्गुष्ठ मित्यनुज्ञया पितुस्तथैव प्रयतमानो मन्दतममपिनास्पन्दत । अथाधिगत्य प्रयोजनज्ञननचणे निजाचरणे विफलता मक्षीण मन्दाक्षक्षितावसकृत्परीक्षितं सम्भूयसखिभिस्समाने स्तमुच्चैः



पितुमुग्रप्रयोग मातन्वानेऽपि तस्मिन् नचमनागपि

चचालाङ्गुष्ठं गोविन्दचरणस्य, एवं नवकामिनी कल्पा
यिताप्रवासागत प्रियसङ्गत प्रमदाक्षणकल्पाक्षणदाप्र-
तिक्रियेवतस्यक्षयमगच्छत्, उदन्तमेत मार्दीपयितु-
मिवोदियाय मेदुरशरागेण प्राच्याचलचूडामणिस्तरणिः,
अमीषामभिमानइव तमोविननाश, गोविन्दगोचरेण
नगरैमिवारज्यतेन्दीवदन मारुणेन रागेण, उद्व्रजनं
प्रयुञ्जानानां जनानां समवायइव कैरववनं संकोच
माञ्चत्, गोविन्दतनयाननमिव कमलकाननं वि-
काशमासादयत्, विभाकरैः किरणाइवैषाप्रवृत्तिः पुरम-
भिव्यापत्, व्यर्थीभूतप्रयोगसमुदयास्ते साक्षात्कृता
नुभावतयाऽवधार्य सिद्धतां, प्रवृद्धाभिदर्शनोत्कलि-
काभिराकृष्टा स्सह सहमूण नगरवासिनां समागाय
निटिलतटनिहिताञ्जलिपुटाः प्रणिपत्याभिनवाम्भो-
धरधीरध्वनिगम्भीरस्निग्धया गिरा गोविन्द मैडयन्,
स्तुतिभिरेषपरितोषितश्वेतैर्निश्चलतारकेण लोचनेन
निपीयमानो नूनमय मनूनः प्रभावो भगवत्या भक्त
क्लेशवारिनिधितारिण्या श्रीतारिण्या श्चरणसारस्यै
वेत्यभिधाय प्रशंसाभिस्तानभ्यनन्दयत् ।

अथ संजातविस्मयात्तस्मान्नगरान्निर्गत्य नाधिके
न दिवसेन नीलाचलातिपावनवन विन्यस्तानिल-

[१] [illegible]ेति वा पाठः। [२] [illegible]ति वा पाठः।

यां, नरहरिणनायका

विसदृशेति असम्यक्तयेतिभावः। एतर्हि अधुना, चणे ख्याते, क्षितौभूमौ, तं देवनाथम्, असकृत्परीक्षित मित्युग्रप्रयोगविशेषणम्, तमोऽज्ञानं तिमिरंच, रागेण प्रेम्णा रक्ततयाच, उदवजनमुच्चाटनम्, निटिलो भालः, ऐडयन् अस्तुवन् अनूनः सर्वः,। नरहरिणनायको नरसिंहः,

कृतिमिव पूर्वकाष्ठाकलितोदयां प्रह्लादेष्टदायिनींच, नारायणमूर्तिमिव ब्रह्मपुत्रोपास्यमानपादां, विपिन भूमिमिव भैरव भ्राजितां घण्टारवाञ्चिताञ्च, रत्यादिस्थायिभावाभिव्यक्तिमिव प्रतीतानुभावां सुकृतभूतेनलभ्यां च, उद्यदादित्यमण्डले नेव रक्तांशुकेन, सूचनीयवृत्तविशेषेणेव चूलिकोल्लासितेन, विधिविवेकेनेव मण्डनविकाशितेन, हरिहरप्रणयिमानसेनेव विलसत्केशवेशेन, समीचीनचित्रेणेव दिव्यवर्णभासुरेण, नीलकण्ठेनेव कौमारामोदकरेण, कुमारिकानिकरेण, नोनूयमानां दैवतैरिव कामरूपवर्तिभिः, कञ्चुकिजनैरिव शुद्धान्तस्थितैः, अमाध्यमिकैरपिन्यक्कृत विषयिभिः, दहन दग्धराजाहैरपि राजप्रियैः, विप्रैः पूज्यमानां, होमधूमधूमरित शशधरोल्लेखि शिखरातिसुन्दरमन्दिरां, महदुत्पादयित्रीमपि सूक्ष्माम्, अनाश्रितामपि व्यापिकां, प्राचीस्थितामपि

पूर्वेति, पूर्वकाष्ठायां प्राच्यां कलितोदयाँ कलित उदयोयया, पूर्वं काष्ठादिति

चाऽर्थः, भह्लादेष्टदायिनीं भह्लादः भकृष्टआमोदस्सएवेष्टस्तस्य, भह्लादस्य हिरण्यकशिपोरात्मजस्य यदिष्टं तस्यच दायिकाम्, ब्रह्मपुत्रोनदोनारदश्च, पादः भत्यन्तपर्वतः चरणश्च, भैरवाङ्गिशनोभयानकोदेशश्च, घण्टारवः घण्टायाः शब्दः, घण्टारवाख्यपुष्पिका । भतीतः ख्यातोज्ञातश्च, अनुभावः भभावस्स्वेदादिश्च, सुकृतेति, द्वितीयपक्षे "पुण्यवन्तः भमिण्वन्तियोगिवद्वृससन्ततिम्" इत्यभिधानान्नानुपपत्तिः, अंशुकं वसनम् अंशुकः किरणः, चूलिकाचूडीकाक्षाभरणम् "अन्तर्यवनिकासंस्थैश्चूलिकार्थस्य सूचना" इत्युक्तलक्षणस्सूचनाविशेषश्च, विधिनिरेकोमीमांसानिबन्धः, मण्डनं भूषणं मण्डनमिश्रश्चमण्डनः, केशवेशः केशरचना केशोवेशश्च केशवईशाश्शिवश्च, वर्णःस्वरूपं जातिः नीलपीतादिश्च, नीलकण्ठोमयूरश्शिवश्च, कौमारामोदः शैशवस्य कार्तिकेयस्यचामोदः, नोनूयमाना भतिशयेन स्तूयमानाम्, कामरूपवर्तिभिः कामरूपे तदभिधानेदेशे इच्छाधीनरूपे च स्थितैः, कञ्चुकिजनैः, "अन्तः पुरचरोवृद्धो विप्रोगुणगणान्वितः, सर्वशास्त्रार्थतत्त्वज्ञः कञ्चुकीत्यभिधीयते इत्युक्तलक्षणैर्लोकैः, शुद्धान्तस्थितैः विप्रलान्तः करणे राजावरोधेच स्थितैः, माध्यमिको विषयज्ञानयोरसत्यत्ववादीबुद्धप्रधानशिष्यः, विषयि इन्द्रियं विषयविशिष्टं ज्ञानं विषयोज्ञानं चेतियावत्, राजार्हः राजयोग्यंवस्तु अगरुश्च, शशधरोल्लेखिशिखरेत्यनेनौन्नत्यं मन्दिरे व्यज्यते, महत् महत्परिमाणविशिष्टं महत्तत्त्वमन्तः करणंच, सूक्ष्माम् अणुस्वरूपां निरवयवद्रव्यरूपांच, सूक्ष्मतरोपादानत्वमेव भवति सूक्ष्मस्यनतुमहदुपादानत्व मिति विरोधप्रतिभावः । अनाश्रिता म वृत्तिभूतां कारणानाश्रितांच, एतैः विशेषणैर्मूलप्रकृतिरूपत्वं कामाख्यायां व्यज्यते, "सौक्ष्म्यात्तदनुपलब्धिः" "हेतुमदनित्यमव्यापिसक्रियमनेकमाश्रितं लिङ्गम्, सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" इति

साङ्ख्यकारिकायामीश्वरकृष्णेनाभिधानात् ॥

दक्षिणपद प्रापणीयां, प्रतिषेधितसुरास्पर्शानपिद्धि-जन्मनस्सुरालयं नयमानां, भारतवर्षप्रमुखभूषां, कामाख्या मधिदर्श मपरोक्षलक्षणदेवता दर्शभूतां, ददर्श । तत्र च तां समाराधयदागमोदितैर्मोदितः प्रकारैः, वपुरमार्जयन्मण्डलेषु कुण्डस्य, अशनवसनमण्डनद्युम्न दानैर्वृन्दान्यमानयत्कुमारिकाणाम्, अतोपथश्च देवी सपर्यापरायणान् द्विजातीन्, अतन्नोदात्मजन्मनोमनोस्साधनोपाय मवधानेन, गिरिगुहागृहे गृहीतवासो विलोकयन् रमणीयकं नदतां नदतरंगाणां दिष्ट्या बहुदिष्टं हृष्ट मानसोऽध्यतिष्ठत् । अथ गणरात्रापगमेऽभिनवसीमन्तिनी मन्दाक्षेष्विवक्रमेणक्षीयमाणेषु शैवलिनीजलेषु, पृथुकइवधात्र्याः पयोधयति तीव्रदीधितिकरे, खेलल्ललनाजनस्तन नितम्बशैलास्फालनैरविशनैश्शातता श्रथतिसलिलेसरस्याः, वधूविरोधिनमभिसन्धायदग्धुं कृशानुकणकदम्बकमिव किरणनिकरकैतवात्कमलिनी कामुकेनाकीर्णमाकलय्य पुञ्जीभूय प्रमदाकुचगिरीशं सरति शिशिरे प्रियमधुमिलन विगमनादिवमनाङ् म्लायमाने मकरकेतने, आग्नेयकाष्ठाश्रयणसन्तापितसवितृशान्तयह-

वावश्यायं शिखरिसम्मुखीं यात्रां समातन्वति सप्ता-श्वे, प्रत्यग्रपरिणीतयोषिदुरोज इव क्रमेणद्राघिमाण मासादयति दिवसे, वैरिवासर विवृद्धि विज्ञानविहित याशुचेव क्षामतामुपगच्छन्त्यां क्षपायां, विरहोत्क-ण्ठितास्विवोष्णश्वसन शुष्यमाणाधर किसलयासु वि पिनावलीषु, वैसारिण दशनदंशनेन प्रेयसाऽवह्नुय-मानजलान्तर्निमज्जनजनितनखरगाढक्षत प्रेयसीव क्षोजयुगळेषु, आस्योरो भवाद्यभ्याशाम्भोजविभ्रमभ्रा म्यद्भ्रमरवारणाकुलोत्तानतरणकारि

दक्षिणपदं दक्षिणदिशायायिवर्त्म, आगमेप्रसिद्धो दक्षिणाचारश्च, सु-रालयं मद्यगृहं स्वर्गंच, अचिर्दर्शम् अमावास्यायाम्, द्युम्नं धनम्, मनो-र्मन्त्रस्य, दिष्टं कालम्, शैवलिनीनदी, पृथुके शिशौ, धात्री पृथिवी उ-पमाताच, पयोजलं क्षीरंच, धयति पिबति, आस्फालनै स्ताडनैः, शात तां कृशताम्, वधूविरोधिनं सूर्यस्य वध्वाः कमलिन्या नाशकत्वेन रिपुं शिशिरम्, अभिसन्धाय विज्ञाय, कमलिनी कामुकेन सूर्येण, आकीर्ण परितोनिःक्षिप्तम्, मधुर्वसन्तः, आग्नेयकाष्ठाश्रयणम् आग्नेयदिशायाएव अग्निसम्बन्धिकाष्ठस्य सम्पर्कः, सप्तिः अश्वः, अवश्याय शिखरी हिमा चलः, सप्ताश्वेरवौ, श्वसनोवायुः श्वासश्च, वैसारिणेत्यादि सप्तम्यन्तचतु-ष्टयं कौतूहलस्य विशेषणम्, उरोभवः स्तनः,

(१) मुखार इति वा पाठः।

कान्ताकरकुशेशयेषु, जघनघनाघातमसहमानेनेव नितम्बिनीनां क्रीड़ारथकैतवेन तारमारुदता पुलिने-पलायमानेन पाथसा प्रमादितेषु. हृदयस्थिति वाञ्छयेव रमणीनां श्रुतिपद प्रविष्ट पयोव्युदसन व्याधूयमानेनमूर्ध्ना मञ्जुलेषु, अभिजात जलजातजलजातकौतूहलेषु मनोहरेषु, चरमाचलचूडान्तिकचलत्तरणिकिरणाकलित निस्तलसमीरणायनजालकसमीपे समीहयापुरुषमावलोकनस्य स्थितानां वनितानां सपदि पाटीरपङ्कानुलेपित स्तनतनूदरवदनेषु शोभामावहत्सुकुङ्कुमस्थासकस्य पुरःस्थापित हाटकस्फुटदलपुटित ताम्बूलवीटिका परिपूरित शातकुम्भभाजन भ्राजितसुभ्रांशुविशद पर्यङ्किकासमासीनोज्ज्वलवेशशालिनीनां कलाकलापप्रवीणानां, वचनस्वरविजितवीणानां, व्यजनवातविधूयमान बाहुव्रतति वक्षोरुहवदनवसनानां वारविलासिनीनां, तैस्तैर्विचेष्टितै रसन्नपथेन प्रशान्तताप तयारमणीये वासरावसाने विहरतामङ्ग यूनां यूनां विमुह्यमानेमनसि, अतिक्रामति निदाघ समयेऽविलम्बित मप्रवासिहर्षावापनक्षमं वर्षागमं विभावयन्न नकूनभरकृत्य जगज्जननादिशक्तिमती मनङ्गवतीभगवतीं ग्रामाय गुणग्रामायताय पराववर्तत। एवं तत्तद्विषयवीक्षणेन तत्तद्विशेष माप्तवन् कृतदु-

रापकृत्य तथा प्रहृष्टचेता व्यतीत्यायानेन कतिपयाने हसोगेहं प्रीतिकेतनेन तनयेन समं समाययौ । एतदी यादागमनात्पुरैव झटित्यागत्यकीर्तिर्भुवनतलमुद्भा-सयन्ती प्राचीकशच्चेतां सिचिरं चातकायितानि-बन्धुतानाम्,

घनः सान्द्रः, पाथसाजलेन, प्रसादितेषु प्रसन्नतां प्रापितेषु रमणीये ष्वितियावत्, अभिजातेति, अभिजातं रुचिरं जलजातं कमलं यत्र तस्मिन् जलेजातेषु कौतूहलेषु इत्यर्थः । निस्तलसमीरणायनजालकं वर्तुलं गवाक्षजालकम् । तनूदरं, कृशोदरम् । स्थासकस्य चार्चिक्यस्य । उज्ज्वलवेशः, विमलवेशः, शृंगारवेशश्च । तैस्तैः. अनिर्वचनीयैः । जन-नादीति. आदिनास्थिति प्रलययोः परिग्रहः । अनङ्गवतीम्, अशरीरि-णीम्, गुणेति, गुणानां ग्रामैः समूहै रायताय विस्तृताय । आयानेन, आगमेन । अनेहसः, कालात् ॥

मिलिताश्चतां गोविन्दप्रभ्युनन्दयन्नादरैः प्रणयातिश-यावबोधनकरैः । अथ वादिमानसमानोन्माथकरो दे-वनाथश्चिरमागमोदीरितोचित क्रियाप्रचयाचरणेन वि रचनेनच तन्त्रकौमुदीपराध्यागमनिबन्धानामविन्द तानन्यगामिनी मागमाचार्यपदवीम् । एतेनसङ्गता श्चसकलाएवसोदरा अनुदिनं तातपादमापादयन्मुदित मतितमां नवनवैः शास्त्रीयकल्पनाकौशलैः । पिता च समुचितानाम् मकारसत्कलकन्यकास्वत परिग्रहंय-

थासमयमेषाम्, अभिमतोपयामदीक्षिताश्चतेऽनुपमा-
मानन्दपरम्परामन्वभूवन् । तत्र विद्यापतिः पत्न्यामे-
कत्र विबुधाग्रगामिनौ शुद्धाचरणरञ्जितावनिरुद्धा-
च्युतौ, अपरत्रच दीर्घदर्शिनौ सकलजनानन्दनौ
गरुड़रघुनन्दनौ, हरिकेशपीताम्बरौ च विदुषांवशौ ज
नयतेस्म । एवमेवप्रावर्ततान्यतोऽपि विपुलोवंशः ।
तेषु पीताम्बरो गंगेश मथुरेश हृषीकेशान् केशवोपा-
सकानुत्पादयामास । ततोहृषीकेशात् नारायण-
चरणचिन्तनपरायणः, संनातनधर्मधिषणः, सुप्रसा
दितपौरगणः, पौराणिकाग्रगणनीयः, थेघूको वहुग्रजः
प्रादुर्वभूव । तस्यचैकस्यां भार्यायां भिषारी जानकी
नाथ चाननाभिधानाः, परत्रचच्छत्रपतिः, तृतीया-
याञ्च उमापति किनूनकुलपतयस्तनया अभवन्,
उमापतेस्तु महीधर शम्भुनाथावात्मजावजायताम् ।
तेषु शम्भुनाथात् दुर्मिलमनसिलस्पर्शमणिनामधेया
गेया वदातकीर्तय आविरासन् ॥ अथ समये समय
मानेऽयमयतां प्रयातेषु परिणतेरभिमुखं भारतभूमि
भागधेयनिचयेषु, भवभक्तिभरभावुक भवनभूतस्य,
भृशभावित भाग्यवैभवभवविभूतिभाजः प्रात्यहिकनि
त्यनैमित्तिकादिकृत्य प्रभृत्यनेक श्रयणीयश्रेयो विश्रा-
मशरणस्य, कमनीयमनीषाऽपरहृशावसात् शास्त्रसा-

रसरणे रज्ञानतिमिरवारणैकतरणेः स्पर्शमणे रम्बिके वारुन्धतीव सावित्रीव सुकन्येव रोहिणीव वैदेहीव सतीनामशेषवर वर्णिनीनां ललामभूतायां-

आपादयन्, प्रापयन् । एषां विद्यापतिप्रभृतीनाम् । उपयामः, परिणयः । समयमाने, प्राप्नुवति । अयमयताम्, शुभावहविधिव्याप्ततताम् । आयुष्कं क्षेमम् । भवा जाता ।

रम्भा

ललनायां सकललोकलोचनचमत्कारिणी चन्द्रकला प्रतिपदीव, अभितस्समुद्भासयन्तीकान्तिश्शाणकषणोल्लिखितमणिसंहताविव, शोद्दामातप निवारयित्री पयोदप्रभा प्रावृषीव, सुमनश्शतानन्दिनी विपिनवीथी सुरभिशोभायामिवान्वजायसमवायप्रदीपनायसमजायतबालिकानाम । ववौचतदा रजसापरिशीलित स्रवन्तीसलिलकणशीतलः प्रसूनपरिचयामोदसुरभिर्भाविभुवनसौभाग्यमभिशंसन्निव मालयोनभसिनभस्वान्, प्रचकाशेपरमनावृतोभास्वान्, प्रमोद यन्त्यस्सकलानभिवभुः पुञ्जीभूतप्रभूतघनसारपराग धवलाः कलाः कलाकरस्य, अतितरामदीप्यतप्रदक्षिणार्चिस्सञ्चयसंसूचित मङ्गलागमा आगमाग्नयो ऽगारेष्वाहिताग्नीनाम्, अकस्मादेवसतामुल्लास हृदयम्, विमलतमनीलाम्बरतामापेदिरे हरिदङ्गना स्त-



१ मङ्गलागमाश्शोतवैश्वानरा आहिताग्नीनां मन्दिरेषु, इति वा पाठः ।

मिस्राभिसारिकाइव, अवापच्च क्षणदा सान्वयाम-भिख्याम् । ततस्सङ्कलितगणितसारो देवपण्डितः प्रमादादिरहितः पुरहितः पुरोहितः पुरोहितश्च कृतिस-तदैवसुत्सारयितुकामावुत्साहेन विहितोत्सवं जनक-मकारयतां विधिबोधिताधिगमोपेत चेतसा श्रील-क्ष्मीत्यभिधानसंविधाना दिक्रियाकदम्बक मेकादशे दिवसे, युक्तरूपश्चायं स्पर्शमणेर्लक्ष्मी समुद्भवः, क्रोड़क्रीड़त्पोततया ह्लादिनीवशुशुभे तदीया धात्री । ततः प्रभृति परिपोष्यमाणासा तरसा समेधमानाप-घनाशगदिवसमुदित शैशवसुधांशुमण्डला नैकविध-मनुभवन्ती शिशुतोचितसुखं, सखीभिस्समभूहवहलैः कुतूहलै रातन्वती परमं प्रमोदं, पराचीनार्वाचीन पुरन्ध्रीजनोपचीयमानकुलव्यवहृतिपरिचयाऽपजहार-करणामान्तरं समेषाम् । एवमतियातेषुकति

सकलेत्याद्युभयपक्षे विशेषणं योजनीयम्, प्रतिपदि द्वितीयायाम्, "प्रतिपच्चन्द्रमिवप्रजानृपम्" इतिभारविश्लोकव्याख्यायांमल्लिनाथेनाभि धानात्, शाणः निकषः, आतपः खेदो रौद्रश्च, सुमनश्शतं सच्चेतसां पुष्पाणांच शतम्, वीथीपंक्तिः, सुरभिर्वसन्तः, अपरिशीलितः असंपृक्तः, सूवन्तीनदी सुरभि र्मनोज्ञः मालयः मलयसम्बन्धी, अर्चिश्शिखा, आग-माम्नयः श्रौताम्नयः, नीलाम्बरतांनीलस्याकाशस्य वसनस्यचसम्बन्धिताम्, मान्वयां [illegible] अभिख्यामभिधानम्

पुरहितः, पुरहितकारकः पुरोहितः पुरातर्कयुक्तः पुरोहितः पुरोधाः, आश्रिनाग्रहदानपरिग्रहः, स्पर्शमणेः स्पर्शमणिठक्कुरात् चिन्तामणेश्च, लक्ष्मी तन्नाम्नी धनंच, परस्परितरूपकम्. पोतश्शिशुस्तरिश्च, ह्लादिनी नदी, अपघनोवयवः, ऊहस्तर्कः तेन विमलबुद्धिपरत्वं व्यज्यते पुरन्ध्री स्त्री, आन्तरंकरणंमनः ।

पयहायनेषु कामकामिनीमपिकेनाप्य विश्रामरामणीयकभरेण ह्रेपयन्ती, सुचिरस्थायिशोचिषाचक्षण प्रभामप्यधः कुर्वती, मृदुलविशदपेशलावितथभारती, नवसुधामयीं वसुधामातन्वती, सम्विदा विषममपि विषयं विशन्ती, श्रेयसि मानसं निदधती, जनयितृप्रभृतिधरणि विबुधा नाराधयन्ती, पदनख समतया साधुषु सुधांदीधितिं साधयन्ती, सांसिद्धिकमधुरदृशापरिशीलितसेविनी, मेधाविनी, विनीताऽपि नीतिशालिनी, मनोरमाऽपि चारुहासिनी, मध्यक्षामाऽपि प्रमिताक्षरा, सुवर्णालङ्कारभूताऽपि सुवर्णालङ्कृता, शुचिस्वरूपाऽपि तपोऽनुगता, अपर्णाऽपिज्योतिष्मती, वैश्रवणश्रीरिवालकोद्भासिता न्यायविद्येवसदवयवलक्षणा, प्रसून समयस्थितिरिव सुप्रसन्नकानना, विद्योतितदशनवासन्तिका सव्यसाचिनेव विलङ्घितकर्ण स्थितिना नयनयुगलेन राजिता, सत्कवितेव दूषणविरहिता सद्भावशोभिता सुकुमाराऽलङ्कारसङ्कीर्णा ...रुचिरचरणाच दमयन्तीवसदसनेव

त्रिशमयकारिणी, कृष्णामूर्तिरिवाक्रूरसदयहृदया शोभ नव्यजनाकृतिरिव सद्वंशसम्भवा, उमेव गौरी आर्या शिवार्चन निरताच, दुर्गेव निरस्तचामरा चरणावधी रित ताम्राभिमाना आवर्त्यमानचारित्राच, कल्लोलिनीव लावण्यस्य, यष्टिकेवहाटकस्य, शलाकेवकर्पूर

केनापि अनिर्वचनीयेन, ह्रेपयन्तीलज्जयन्ती, शोचिषाकान्त्या, अब इति विद्युतोदीप्तेः क्षणिकत्वादित्याशयः, अतएव क्षणप्रभापदोपादानम्, विशदास्वच्छा, संविदेति तेनात्र सौक्ष्म्यं व्यज्यते, धरणिविबुधोद्विजः, पृथ्वीदेवश्च, कौमारे पृथ्वीपूजनस्यमिथिलायामाचारात्, साधुषु सुन्दरेषु साधयन्ती अनुभावयन्ती, सेविनी दासी, विनीतानीतिरहिता विनयवती च, मनोरमाच्छन्दोमनोज्ञाच, एवमग्रेऽपि सुवर्णालंकारः हेमोपादानकोऽलङ्कारः शोभनस्वरूपस्यतादृशस्वरूपायावाभूषणंच, शुचिः ग्रीष्मः प्रयतश्च, तपोमाघःतपस्याच, अपर्णाज्योतिष्मतीपदाभिधेयालता ज्योतिष्मतीज्योतिर्युक्ताच, वैश्रवणः कुबेरः अलकोद्भासिता अलकेनालकायां चोद्भासिता, अवयवलक्षणानि अङ्गेषु समुद्रोक्तानिचिह्नानिप्रतिज्ञाहेत्वादीनां लक्षणानि च, सुप्रसन्नकानना सुप्रसन्नक माननं यस्याः सुप्रसन्नं काननं यस्यां सा, सव्यसाचिनाऽर्जुनेन, कर्णस्थितिः वीरकर्णस्यमर्यादा श्रवसः स्थितिश्च, अदूषणाद्वेषादिभिः श्रुतिकटुत्वापुष्टार्थत्ववाच्यरसत्वादिभिश्शब्दार्थरसगतैः दोषैर्विधुरा, सद्भावः साधुतासतीशक्तिम्सन्तोविभावादयोभावाश्च, सुकुमारा अतिमृदुला सौकुमार्यगुणोपेताच, अलङ्कारसङ्कीर्णा अलङ्कारैस्ताटङ्कादिभिर्व्याप्ता सङ्करालङ्कारवतीच, चारुरुचाचारुचिरचरित्रा ताटङ्कादयश्च, चरणः पदं श्लोकपादश्च, सहसनेत्रविस्मयः सहसूसङ्गत्य

कस्य नयनस्येन्द्रस्यचाश्चर्यम्, अक्रूरसदयहृदया अक्रूरमकठिनम् अक्रूरेतद् भिधानेवा सदयं हृदयं यस्यास्सा, सद्वंशः समीचीनं कुलन्तथाविधोवेणुश्च, गौरी गौरवर्णातदभिधेयाच, एवमग्रेऽपि आर्याश्रेष्ठाच, शिवार्चनं शिवायाः पार्वत्याश्शिवस्य च पूजनम्,कौमारेतस्याचारात । चामरः च मरीमृगकेश स्तदाख्योराक्षसश्च, ताम्रोधातुस्तदभिधानोराक्षसश्च, कल्लोलिनीतरङ्गिणी ।

पूरस्य, आकृतिरिवोज्ज्वलस्य, सरसीवपीयूषस्य, छटेव पाटीर द्रवस्य, वल्लरीवकाञ्चनस्य, द्विजपति मोहनास्त्रमिव अप्रतिहतशासनेव विजयवैजयन्तीव मानस्वरूपमिव मदनस्य, अधिदेवतेव सौन्दर्यस्य, मन्दुरेव लोचनतुरङ्गमस्य, (रमणीय) मनोज्ञसर्गविज्ञतागमक पदमिवकमलसम्भवस्य, मूर्तिरिवासेचनकभावस्य आलोकमयीवदेहदीप्तिभिः, तमोमयीवकुन्तल कान्तिभिः, चित्रमयीवाभरण प्रभाभिः, शेवधि स्सैरन्ध्रीणां, मौलिमालामणिस्सुन्दरीणां, समितिः श्रेयसां. शाला शालीनतानाम्, आकृतिर्धृतीनाम्, आदर्शः कुलीन कन्यकानां, दैवतदुहितृविभ्रमैकनिकेतनं परिचिन्वतामपिदूरतः पश्यतां, परिणेयतामयासीत् ॥

इति मैथिल श्रोत्रिय श्रीबालकृष्णमिश्र
रचिते श्रीलक्ष्मीश्वरीचरिते तुरीयोच्छ्वासः ॥

उज्ज्वलस्य विमलदीप्तेः शृङ्गाररस्यच, अधिदेवता अधिष्ठातृ देवता मन्दुरा वाजिशाला, शेवधिः निधिः, सैरन्ध्रीणां स्वेच्छया शिल्पकारिकाणाम्, शालीनतानां लज्जानाम्, निकेतनं विषयः, ॥

इति तुरीयोच्छ्वास टिप्पणी–

## ॥ कविवर्णित शुद्धौत वंशानुक्रमणिका ॥

रविकर ठक्कुरः

१ बुद्धिकरः — २ रविकान्तः

बुद्धिकरः → १ हलधरः, केशवः

रविकान्तः → कीर्तिकरः → दूतनः

हलधरः → रतनः

केशवः → १ रुचिकरः, २ गोविन्दः, ३ गोनूकः, श्रीहर्षश्च

गोविन्दः → १ ठक्कुरकः, २ म०म० विद्यापतिः, ३ म.म. दामोदरः, ४ म.म, रामनाथः, ५ आगमाचार्यः म.म. देवनाथः, ३ तर्कपंचाननः म.म गोपीनाथः, ७ कण्ठकोद्धारकारकः म.म. मधुसूदनः ८ म.म. जनार्दनः,

विद्यापतिः → १ म. अनिरुद्धः, २ म. अच्युतः, ३ हरिकेशः, ४ पीताम्बरः, ५ म.म. गरुडः, ६ म.म. रघुनन्दनः

पीताम्बरः → १ गणेशः, २ मथुरेशः, ३ हृषीकेशः

हृषीकेशः → पौराणिकः थेघूकः

पौराणिकः थेघूकः → १ उमापतिः, २ किनूनः, ३ कुलपतिः, ४ छत्रपतिः, ५ चाननः, ६ जानकीनाथः, ७ भिखारीकः

उमापतिः → महिधरः, शम्भुनाथः

शम्भुनाथः → दुर्मिकः, मनसिकः, स्पर्शमणिः

स्पर्शमणिः → सुरमरनः, मनमरनः, हिमरनः, कन्या महाराज्ञी—श्रीश्रीश्रीलक्ष्मीश्वरी देवी

सुरमरनः → महेशः, रघुनन्दनः



# अथ पञ्चमोच्छ्वासः ।

अभूदभूतचराद्भुतविशदपदतपोऽनलविभूतिभूमभूमिः, भूमीश्वरनिकरशिरश्श्रेणिकाविभूषणभूतातिभासुरविकस्वर चरणाम्भोजनिः, खण्डवलाभिधाविधान प्रतीतान्वय दुग्धोदधि विवर्धनपार्वणसुधा निधिः, कविता (कवन) वसुधाविधिः, बुद्ध्यावधीरितबुधावधिः, विहगराजइव पराभवभयभरभ्रान्ताहिसंहतिः, सीरध्वज इव प्रविदितसम्बिदेतविदेहाधिपतिः, गिरिगहनप्रदेश इव जनितजगदुपयोग कारकागमगणः, मुकुरोज्ज्वलमुकुटइव वर्णनीयसद्धीरमणिसुवर्णविसर सेवितः, सकलानङ्कपाल यन्त्याऽपि सत्या कीर्त्या समत्या हृतः, भाविताशेषभुवनाभोगेनाऽपि दग्धैकद्वेषणेन प्रतापदहनेनोद्दीपितः, स्वच्छमाचरन्नपि श्यामाचरण परायणः, वदान्यसारोऽप्यनुदारः, अचलानन्दविधायकोऽपि विबुधमण्डलाखण्डलः, अलङ्कारोभूसुराणां, कर्णधारः शास्त्रसागराणां, लज्जाकरः सुरशाखि सुरभिचिन्तामणीनां, विहरणावनी षड्दर्शनी[1] विलासिनीनां, कारुणिक गणाग्रेसरः क्षोणीश्वरः

म० म० महेशठक्कुरः

श्रीः । विशदपदेति[1] श्वेतवर्त्मार्थकं तपस्स्वरूपेऽनलेऽद्भुतत्वोपपादकं

बोध्यम् अनलस्यकृष्णवर्त्मत्वात् । विभूतिर्भासितमैश्वर्यंच, भूमा आधि

पयम् । वुधावधिः सकलबुधश्रेष्ठः । अहिरशशुरशर्पश्च, सीरध्वजोजनकः । संविवेतः ज्ञानेनचित्रः । विदेहो जीवन्मुक्तः मिथिलादेशश्च, कारकागमः आगमः शास्त्र मगमोह्क्षश्च । सद्धीरमणिसुवर्णानां सत्पण्डितेषूत्कृष्टानां सज्जातीनां, समीचीनहीरकमौक्तिककनकानांच । अङ्कपालयन्त्या, आलिङ्गन्त्या, सत्या पतिव्रतया कान्तयाच । अत्याहृतः दूरं प्रापितः । भावितः व्यापृतः श्यामाचरणेति, श्याममाचरणं कालीपदंच । तारोमुख्यः, अनुदारः न उदारः दारैरनुगतश्च । अचलानन्दः अचलानां गिरीणा मचलायाः पृथिव्याः, अचलः स्थिरोवा आनन्दः । विबुधोदेवः विशिष्टपण्डितश्च; कर्णधारोनाविकः । सुरशाखी कल्पद्रुमः, सुरभिः कामधेनुः ।

य आशांशुक विहसितयशाः, प्रवृद्धवृषाधिष्ठितः, उत्तमाङ्गगृहीतगोविन्दपदारविन्दामृतः, परपुरतापकः संजातपरमानन्दः, वाञ्छितप्रदः, शुभ्रांशुलाञ्छितः, साक्षान्महेशइवामन्यतमानवैः । यमधिकोन्नमित शिरोधि रोधितत्रपा यौवनमदालसाअपि लालसाविवशास्स सङ्कोचलोचनेन ललना व्यलोकयन् । येनसमातन्यमाने वैदुष्यनिकषे परीक्षणे समुत्तीर्णा विचक्षणाः क्षणादेवक्षोणीतलचिरस्थायिनी मलभन्तसमन्ततो विज्ञाततरां समज्ञां प्राज्ञवहुलैरपि जनसमुदयैस्समुद्गीयमानाम् । यस्मै सुकृतागमवनलवनलीन यवनवशंवदामिलां मिथिलायाः कलयतेऽसोढ दुःखायाशेषविशेषसङ्ख्यावदतिक्रान्तवैदुष्यतोषितो भिल्लीकृत वैरिमहिलो दिल्लीसार्वभौमो मिथिलाज्यराज्यं व्यस-

सृजत् । यतः पराजयाशङ्कयेवाक्षपादः काणादश्चादि-मोदूरदर्शिनां पुरैव प्रयतङ्करणीमपि तीरभुक्तिधरणीमभुञ्चत् । यस्यचचन्द्रात्मजतया शुक्लरूपैव वुधरूपताऽभवत् । यत्रच शारदारमाच प्रत्नतरामप्युदस्य-सपत्नतां यत्नात्सहर्षं सहसासहवसति मकरोत् । यो रामायण निशमनसमुचितां दक्षिणामिव स्पर्शमणिं सामीरणेस्सकाशादासादयत् । योऽधिदिल्लिकल्छषमल्ल विभेदभल्लकवदाचरित हल्लकोल्लासिकलिन्दाचल कन्यकाजलेमज्जन्नवाप्यस्वाप्नदशावेक्षण विषयीकृतां पाषाणमयीं भगवतीप्रतिमा मतितमां तमांसिरोचिषा-तिरस्कुर्वती मग्रहीदादरेण ॥ ० ॥

विहसित यशाइति । इह विशेष्यविशेषणभाव प्रातिलोम्यात्साधारणत्वं वोध्यम् । प्रवृद्धः एधितः स्थविरश्च, वृषः पुण्यं परोक्षश्च । गोविन्दपदारविन्दामृतं हरिचरणोदकं गंगा च । परपुरतापकः परस्य शत्रोः पुरस्य नगरस्य त्रिपुरस्य च दाहकः । परमानन्दः तदभिधानो मोक्षश्च । शुभ्रांशुः स्वच्छकान्तिः चन्द्रश्च । शिरोधिः ग्रीवा । ससंकोचलोचनेन कटाक्षेण । प्रत्नतरामतिशयेन प्राचीनाम् । सहसा हठात् हासयुताच । भल्लकेति भालाभिधानमस्त्रम्, हल्लकं रक्तकह्लारम् । अवेक्षण मवलोकनम् ।

अथैतस्य गोपालाच्युतशुभङ्करास्साम्परायिकप्र-वीरा, धीराग्रेसरा, नैसर्गिकगहनराजनीतिचतुराश्च

त्वारः पुत्रा वभूवुः । यत्र गोपालः किल्विषकराल कालः पितरि काशिकायां निर्वाणं सुपर्वणिप्रातेनापि दुरवापमाप्तुमुपयाते प्रसाधयामास महामहीपाल-पदवीम्, यदीय निदेश मासादयन्नेव दयादर्शिता-भ्युदयां तातेन दूरादानीतां, देवीं, परिदाशितारिपा-लिकां, निजपदसारससेवकालिपालिकां, कपालि-कामनापूरिकाँ, श्रीकङ्कालिकामच्युतसमाराध्यतस्याः

"महेशतनयद्रोही स्वर्गारोही भविष्यति ।
अचिरेणैव कालेन कङ्काली कवलीकृतः ॥"

इतिवरं प्राप्य प्रमुदितः पृतनासनाथस्तृणकमिव त्रिलोकीं कलयन् कलहाय निरयात् । ततः क्षणादेव क्षिप्रक्षणनक्षम कौक्षेयकच्छटाच्छेदित भौरजातीया-क्षीणमद विपक्षक्षत्रियतनुक्षेत्रक्षतोच्छलच्छोणिताच्छन्नाम दामएवरणक्षोणीं व्यतानीत् । अकार्षीच्चस्वायत्ततावती ममरावतीं तस्यनगरीम् ॥ अथ कदाचन दैवदुर्विपाका दनुजविप्रलम्भेनावधिसम्बन्धमदधानेन विमनायमा-नोऽन्तरायमन्तरादुष्कर तपश्चरणकामो वैमात्रेयं भ्रातरं प्रतिभूपतिदलभयङ्करं शुभङ्करं भूमीभृतमभा वयत् । येनग्रन्थनातिथीकृतास्तिथिनिर्णय प्रभृतयो निवन्धाः स्वानिततरा स्तडागाश्च कृत प्रयतयागा अद्यापिनिद्योतमाना उपकुर्वन्ति सर्वान् । यस्मिन्

विजयाय प्रयाणं विदधत्येव वारिदायन्तेस्म वैरिवनितानां लोचनानि, । यत्र शास्त्रीय विचारं चिकीर्षत्येव चिरं चकम्पिरे प्रतिविपश्चितां हृदयानि ॥

अरिपालिकां रिपुपंक्तिम् । पृतना सेना । कलहाय युद्धाय । क्षणनं मारणम् । कौक्षेयकः असिः । भौरजातीयः भौराग्रामवास्तव्य एव आसीत् । अमरावती नगरीतु मिथिलायां कमलानदी प्रान्तेऽवर्तत । अभाषयत । अकरोदिति यावत् ।

ततोऽस्यसुताश्शात्रवसीमन्तिनीसंहतिस्तुताः सदपरुषा रुषोन्मूलितकलुषाः पुरुषोत्तम नारायण सुन्दरा गुरुताधुतधराधराः क्रमेण भूपालकप्रवरा अभूवन् । येषु मुरमथन इव रुक्मिणी प्रेमस्थेमानमास्थितः प्रथमोनिरास्थायवरूथिनीभिः परिपन्थिनां पृथिवी मात्मसादकरोत् ॥ एतस्मात् सन्मतिपरिपाकस्याकरो लालाकः, ततश्च सुकृतव्रतति कन्दः गुणानन्दः ततश्च गुणिजनानां नाथ एकनाथः, ततश्च कीर्ति विततः प्रतापसिंहो माधवसिंहश्चाजन्यताम् ॥

अस्तोक सुश्लोकभरेण कविवरेण सकलाहिताहितदरेण सुन्दरेणचानेकत्र दीर्घिका रसविशेषा अखानिषत । अघटिच कूटचेष्टावेष्टितं प्रतिभटानां कूटमुत्पाटय निष्कण्टकं राष्ट्रपटलम् । अथइतोमहिनाथ



नरपतौ नरपतिप्रणतपादपङ्कजावजामिषासाम् ।

तयोराद्योऽनवद्यविद्या प्रधनवीरो विरोधितां दधानस्य पृथुधनस्य गजसिंहाभिधानस्य दुर्गं दुर्गतं व्यतानीत्। परिणिनायचतदीयांश्रियं स्वयंवरेणविधिना

नरपतिश्च सङ्गरेजङ्गम्यमानानभङ्गविक्रमान प्रज्ञया सङ्गतानपि मोरङ्गदेशीयान् प्रसभं पराभूय भूयः सार्वभौममभिनन्दयां बभूव। उपचाययां च कारच रणेन मणिवितरणेनच कलाकरमूर्तिजित्वरीः कीर्तीः कुलानिच कवीनाम्॥ अथामुष्य मेदिनी शमुख्यस्तुष्यद दूष्य वैदुष्यसंघो राघवसिंहस्तनूजोऽभवत्। यो भूपसिंह माहवे सहसा साहसो विनिहत्य वाहेन वहलकोलाहलां पचमहलामाह्वयेन तप्पामभिदीपितदर्पालिरग्रहीत्। व्यजेष्टचेष्टसमरचमूचरतचेष्टयैव ध्रुवसिंह मधिपतिंधरण्याः। यदीयविरुदावली मद्यत्वेऽपि सद्योदीप्त हृदय मुद्गायन्ति वृन्दानि वन्दिनाम्॥ ततस्तस्मादास्कन्दनेजिष्णुरूपौ विष्णु सिंह नरेन्द्रसिंहौ समस्तनयांश्च शास्त्र निष्णातौ प्रादुरास्ताम्। ययोरपरः पाटलिपुत्रपदप्रथित पुरस्य सविधे मृधे विधेयोवितताार साहायकं सार्वभौमस्य॥

सदपरुषाः साधुष्वनिष्ठुरवचनाः। रुक्मिणी एतन्नामधेया तस्य महिषी, कृष्णरमणी च। वरूथिनीभिः सेनाभिः। सुश्लोकः सुयशः सुपर्णं च। अहिताहितः अहितेषु प्रहितः। कुटम, ...गाय पुञ्जं। प्रधनं

युद्धम् । तुष्यदित्यादि तुष्यन् अदूष्य वैदुष्यस्य संघोयस्मात्सइत्यर्थः । आहवे युद्धे । सहसं हासयुक्तम् । वाहेन बलेन । चमू सेना, मृधे युद्धे । विधेयो विनयग्राही ।

विक्रमसमीकृतामन्ददर्पकन्दर्पदहनोऽधिकन्दर्पिकातरङ्गिणीतीरं भीषणतरंसमरमकरोत् । यस्मिञ्छात्रवस्तुभ्यच्छरीरक्षरच्छोणितप्रोक्षिता यस्यकीर्तिं रकलितोपमानं श्वेतिमानमासादयामास । यस्यविश्राणनसलिलशैवलिनीसञ्चयेषुव्यसिसृजदसून् निःस्वतास्वतएव ॥०॥ अथासौसूनुशून्यश्शेष मिव रसाश्रितं भोगिनायकंच त्रिभाकरमिव ओजोव्याप्तभुवनं राकापतिमिव विलसितकलाकलापं, शमितचकोरलोचनप्रतापंच प्रताप सिंह मभिषिषेच । ततोऽयमप्यपत्यमनवाप्तो निजपदे क्षितिपसमुचितैर्गुणै रुपचितं माधवसिंह मास्थापयदास्थया विधानैः । यः खण्डवलान्ववायावदातजलजातजातविभातसमयः, साधुव्रातमानसकुमुदसमुल्लास कलामयः, कात्यायनी चरणइव सिंहाकलितः, कंसक्षयकारीव धर्मपक्षरक्षकः, सव्यसाचीव दुश्शासन सपत्नः, उदन्वानिव सन्तान सन्तोषित सुमनस्सन्तानः, खगनायकइव जिह्मगद्वेषणः, चन्द्रइव समुद्भूतपितृको जैवातृकश्च, बहुवाहिनीनाथोऽपि माधवः, बलगृहीतपरवसुमतीकरोऽपि पाप्मनाऽस्पृष्टः, शुचि

रपि जीवनात्मा, सिंहोऽपि नरकुञ्जरः, धीरोदात्त शान्तललितः, दक्षिणोऽनुकूलश्च, तिग्मधिषणः, दुर्ग तैकशरणः, यो देशान्तर माश्रितेभ्यश्श्रोत्रियेभ्यो निज राज्य आनाय्य प्राज्यमारचय्य निकाय्य सत्तमं, पुरु, प्रशस्य सस्य सम्पादनदशं सपदिपरमादरेण केदार मदद्वात् । यस्तदीयपरिणयानुवन्धिसाधुतासाधनंधनं प्रतिपाद्यकौतूहलकमवध्नात् । यो धाम्ना नाम्ना साम्नाच समाम्नातोऽनिभाममभावयत्सभाशोभाम् । यं सुदर्शनोज्वलकलेवरं माधवमिवापरममन्यन्तजनाः । येन निष्ठया प्रतिष्ठाविधिना सन्निधापिताः सुरधुनीधूर्जटिप्रधानविवुधा अधुनापि समुद्धरन्ति निधनमधिगतानमितान् ।

निःस्वता दरिद्रता । रसाश्रितं रत्यादि विपयिण्याभग्नावरणयाचित्ता पृथिव्याचाश्रितम् । भोगी भोगवान् अहिश्च । ओजः प्रतापस्तेजश्च । चकोरेति प्रकृते सतृष्णतया चकोरसदृशस्यनयनस्येत्याद्यर्थः । कलामयश्चन्द्रः । सिंहेति सिंहेत्युपाधिना केशरिणाच आकलितः युक्तः प्रासश्च धर्मः पुण्यं युधिष्ठिरश्च । दुश्शासनस्य दुष्ट शासनस्य तदभिधानस्यच, सन्तानः सन्ततिः कल्पद्रुमश्च, सुमना श्शोभनमनादेवश्च, सन्तानः समुदायः जिह्मगः कुटिल श्सर्पश्च । समुद्धृतपितृकः समुद्धार कर्म्मीकृत पितृकः समुन्नीतपितृ गणश्च, जैवातृकः आयुष्मान् जैवातृकपदाभिधेयश्च । वाहिनी नदी सेनाच, माधवः विष्णुः माधवाभिधानश्च । बलं बलात्कारः सैन्यंच, परवसुमतीकरः पराक्रमाक्रान्त[illegible] रिपुपृथिवी पतिश्च । [illegible] जीवनात्मा

जलस्वरूपः जीवनकारकश्च । सिंहः केशरी पराक्रमेण सिंहसदृशः माधव सिंहश्च । नरकुञ्जरः नरोनागश्च नरश्रेष्ठश्च धीरोदात्तादिनायकभेदः अविकत्थनादिगुणयुक्तः शान्तोक्लावण्यवलितश्च । दक्षिणः शृङ्गारीनायक विशेषः समर्थश्च, अनुकूलः पूर्ववत् प्रकृतार्थः स्पष्टएव । निकाय्यं गृहम् । पुरु बहुलम् । केदारं क्षेत्रम् । तदायेति श्रोत्रियस्येत्यर्थकम् , साधुता रमणीयता, अनिभाम् असदृशीम् । सुदर्शनोज्ज्वलकलेवरं सुदर्शनेनोज्ज्वलकलेवरं शोभनदर्शनं मुज्ज्वलं च कलेवरं यस्य तंच । सन्निधापिता इति, संनिधानमहङ्कारमपकारौ ।

येनच गृहीतवलितयात्रपयेव पातालमन्तर्महोदधे रविशत् । यस्ययशोविशदशोचिः प्रतापतापनश्चापहाय विश्वविश्रुतशत्रुतामविरतं सममेवोदगात् । यस्य चातुलितां विचारचातुरीं विचिन्तयन् निजदुहितृसम्प्रदाने वरव्यवस्थामपि समुदायश्श्रोत्रियाणां तदायत्तांहर्षादकार्षीत् । यत्सुकृतसंहत्येवजरयाऽपि परयावलक्षितं क्षेत्रमभिवीक्षमाणाः क्षणेन श्रेयश्शास्त्रनिदेशानुसारेण सम्भारेणाभिषिच्यात्मजन्मानं ज्यायांसं राज्य सिंहासने वशीकृतहृषीको वाराणसीं चिरस्य सुश्रूषमाणः प्रमोदयन्नमन्दं मन्दाकिनी सलिलास्वादनेन शरीरवल्लरीं कदाचिदाश्रितोमणिकर्णिकां तरुणिमनिवासरस्य मिहिरनिर्हितनयनाम्बुजन्मयुगमःस्वान्तेस्मरन्नरकान्तक ममरनिकरेणाप्यनवाप्यं भव्य भव्य यपदमवापत् । । बहिर्वृत्तिजीवितमिवैतस्यात्मजवरः

प्रोद्यत्प्रतापतपनसन्तापित प्रत्यर्थिसार्थाधिष्ठिततुषारा द्रिकन्दरोदरः, निरवशेषनीति निकरनिगूढार्थतत्त्व निकामनिष्णाततया नितान्त निराकृत निखिलनयनिपुणता निकेतनः, सुनासीरइव चित्ररथराजित सगर्व गन्धर्व शिरस्स्वीकृत शासनः, प्रभावतीविभ्रमइव समुद्दीपित प्रद्युम्न द्योतितः, सदाशिवइव सोमामृतो पचीयमानवदनद्युतिः, मौक्तिकमणिमालिकाविशेष इव कामिनीहृदयावस्थितः, खण्डवलान्वयगतोऽप्य खण्डवलपटलान्वितः, यशः पाटीरपङ्कानुलेपिताशाङ्गनावदनोऽपि धौरेयोधर्मवताम्, तपनावलोकन सपत्नोऽपि तपनोपस्थाता, प्रजापटलीप्रणयामत्र-भूतः छत्रसिंह आसीत् । श्रश्रद्धयाधरणिविबुधो-चितयकृत्य बिधानप्रबन्धमनुरुन्धानोऽपि धर्मविरोधि राज्यमण्डलमतितमामवीवृधत् । यो नैपाल नृपालस म्परायप्रदर्शितपराक्रमो भारतकाश्यपीपतिप्रेमपात्रतां प्रापत् । यस्य वल्लभा कीर्तिकामिनी काननेऽप्येका किनी भ्रमति भुवनेषु निर्भयम् । यद्विपक्षकान्ता वक्षोज युगलमर्थतोऽपि पयोधरतांदधौ ।

बलिः वैरोचनिः करश्च । अव्ययपदं कैवल्यम् । चित्ररथः चित्रवर्णो रथः गन्धर्वश्रेष्ठश्च, गन्धर्वः तुरगः देवयोनिविशेषश्च । प्रद्युम्नं धनम्, कृष्णात्मजश्च प्रद्युम्नः । सोमेत्यादि, सोमलताजलेन उमाया अधरामृतेन

चन्द्रामृतेन वा उमा चन्द्रामृताभ्यां वा इत्याद्यर्थः। हृदयं मनः वक्षश्च। खण्डेत्यादौ विरोधः स्फुटएव, परीहारे खण्डवलान्वयः खण्डवलाभिधानो वंशः वलं सैन्यमित्यर्थः। तपनो निरयप्रभेदः सूर्यश्च। अमत्रं भाजनम्। दृशाविति प्रियशोकजनिताश्रुप्रस्पातेनेत्यर्थः।

यः प्रोन्नतसुन्दरेषु मन्दिरेषु सदासुकृतोन्मुखो दानवदलद्वेषणेन्दुशेखरप्रमुखान् लेखान् प्रीत्याप्रत्यतिष्ठिपत् ॥ ०

ततश्छत्र सिंहादमित्रमदमलिनकटतटकरटिकुम्भकपाट पाटन पाटवाटितविकटकण्ठीरवः, प्रोज्वलदोजोज्वलनजातार्जुनयशोजैवातृकः. सान्द्रहार्देन चन्द्रप्रिय प्रायोपलप्रकर निर्मापितेषु प्रोत्तुङ्गशृङ्गमनोपहारि मन्दिरेषु विधिस्थापिताराधितराधापतिः, अतिविशदसन्मतिः, सकलसुकृतिलोकनतुलानुकूलः पाषण्डशमीशालकुलमूलकूलङ्कषः, ऊर्ध्वजाठजानुः, तेजोविजितभानुः। वनीयककमनीयदायकः अवनीपतिमालानायकः, अतिमानमानवातन्यमानबहुमानः, धर्मसमानः, प्राचीनाचार रक्षणचणः, मेदिनीतलमनितमनीषिभिः समंक्षपितप्रचुरक्षणः, संमिलन दूरीकृतदुर्जन गणः, शर्वइवसर्वमङ्गलोपचारचतुरः, प्रोन्नतवसुवशाइवसुरसमप्रभावितः, चित्रभानुरिव प्रति

रुद्धकैरवोदयः, प्रमत्तमातङ्गइव पदन्यासापहृतजन मानसः, व्याकृतिनिवन्धइव सप्रकृतिप्रत्ययः, पृषदश्वसखशिखाश्लेषितोऽपिनयनराजितः, सुप्रीतगुरुरपि द्विजराजः,रसास्थितोऽप्यवियातः, शास्त्रनिकरनिकेतभृतोऽपिचेतोहरः, रुद्रसिंहोऽवततार। येनसांसिद्धिकश्रद्धया विश्वाशापावनं तीर्थकदम्बकं सममानि गमनेन। येनच खानितः सुरससलिलः सामीरणिसेवितः कासारस्सरस्वन्तमपि तिरस्करोति। यस्यवैमात्रेयो वासुदेवसिंहो मेध्यमूर्तिस्सुमेधस्समेधमानयशागजगन्धवारिवन्धुरां गन्धवारिपुरीमध्यवात्सीत् ॥ ० ॥

कटः कपोलः, करटी गजः, कण्ठीरवः सिंहः। वनीयकः याचकः, नायकः मध्यमणिः। अतिमानमपरिमितम्। मनितः विदितः, सर्वमङ्गलोपचारः, सर्वेषांमङ्गलायोपचारः सर्वमङ्गलाया उमायाः उपचारश्च। वसु धनम्, सुरसः रसिक विशेषः शोभनोरसः, जलंच। कैरवो रिपुः कुमुदंच कैरवम्। पदन्यासः चरणगतिः सुप्तिङन्त रचनाच। प्रकृतेः मूलप्रकृतेः सचिवादेर्वा प्रत्ययेनविश्वासेन प्रकृतिप्रत्ययाभ्यां वा सहितः, अन्यद्व्याख्यानं कवि मुखादवगन्तव्यम् विस्तरभीत्यानेहप्रपञ्च्यते। पृषदश्वसखोऽग्निः, नयेननराजितः नयनाभ्यां राजितश्च। गुरुर्वाचस्पतिः आचार्यादिश्च, द्विजराजश्चन्द्रः द्विजानांपतिश्च रसास्थितः रसे रत्यादौ रसायां पृथिव्यां चास्थितः, अवियातः अधृष्टः। शास्त्रनिकरः शस्त्राणां शास्त्रस्यच समूहः। विश्वाशासकलादिक्। सुमेधः मेधावी ॥

अथ तदात्मजन्मासन्मान्यवदान्यनान्यश्रितजन्य नैपुण्यजन्य यशोभाजन सहजसौजन्यधन्यतम द्विजन्मकन्यकातन्यमानगानचरितः, क्रतुव्रतव्रातजात पुण्यभरितः, तनयफलानुमेयाशयशीलशालिपरिपालितकुटुम्बालिसमुदयः, आसादितारिविजयः, शारद पार्वणशर्वरी पतिप्रालेयपर्वतशर्वहाससद्धिकाश काश सङ्काशकीर्तिमयः, चेतश्चपलचञ्चरीकनिश्चलघुचिरानुचिन्तिताञ्चितकङ्कालिकाचरणः, प्रथितप्रतापचणः, विक्रमवशीकृतवैरिभूपः, सकलस्मरप्रवणवरवर्णिनीविलिखितस्वरूपः, पूरितार्थिशस्तिः, प्राप्तप्रशस्तिः, रामइवमानववंशरोचनः, हरिरिववाजिराजविभासित पदः, क्रीडाप्रासादइवपरिकर परिष्कृतः, वैशेषिकनिबन्धइव सविशेषगुणः, नृपतिपद्माकरइव कृततीर्थावगाहनः, प्रवृद्धतापनाशनश्च, सुधांशुरिवेशशिरोभूषणम्, रत्नाकरइवगुणदूषणविवेचकः, पवनाशनपालकोऽपि विनतामोदकारकः, गम्भीराशयोप्यकलङ्कितनयः, इराश्रितरसनोऽपि पुण्यवानेव, उपचितपुरोप्यसमदर्शनः, मिथिलामहीश्वरो महेश्वरसिंहः। यः स्फटिकमप्यधरी चकार करणेनान्तरेण । यश्च वाहिनीविद्रोह वैश्वानरे भारतधरणिनायकाय महती मुपकृतिंततान। यस्य नेत्रेश्वर गुणेश्वर सुन्दरसिंहा अन्योन्यतुलित

गुणोत्करा रसोदरा विजिदिरे ॥ ० ॥

अभिशस्तिः याचितः, मानववंशः नरकुलं मनोः कुलं च । वाजिराजः तुरगराजः गरुड़इव, पदं स्थानं चरणश्च । परिकरः परिवारः पर्यङ्कश्च । ईशो नृपतिः शिवश्च । गुणेति सामुद्रिके शास्त्रे समुद्रेण गुणदोषपोर्विवेकस्य विहितत्वादिति, पवनाशनः सर्पः वायुभक्षणेन तपः कुर्वाणश्च विनतामोदः विनताया विशेषेण नम्रस्यचमोदः । अकलङ्कीतनयोऽकलङ्कितो नयोवायस्यसः । इरामधं वचनं च । पुरः त्रिपुरोनगरं च पुरम् । असमदर्शनः शिवः अनुपमदृष्टिश्च ॥ ❋ ॥

अथैतस्यतनयः त्रिनयनइव कामदद्दर्शनः, केशव इवनदेशजाप्रणयविषयः, लोकेशइव कमलासनविभासितः प्रजापतिश्च, नारायणावतारनिकरइव पालिताम्नायः, गोपितानन्तः उद्धृतगोत्रः, हिरण्याक्षप्रदः, नियमितवलिः, बलविजितराजव्रजः, अमोघमार्गण गणगमनः, उग्रसेनामोदनः, दर्शिताशेषलक्षणभावः, ज्वलन हुत यवनमदश्च । विभावसुरिववसुधाराज्यमोदितः, छायान्वितः, सकलकामिनी नयनोत्पलविकाशकश्च । सोमइवमुदितयोगिस्तोमः, व्योमाङ्गनाश्रितः, उदयानुरक्तमण्डश्च अङ्गारकइव धरणिवर्धनः, सौम्यइव काव्यप्रियः, वाचस्पतिरिव वृन्दारकप्रकरसेवितः, भार्गवइव कर्बूरमालाञ्छितः, सौरिरिव विरोचनारातिः । कुसुमाकरइव खण्डवलाकुलकाननसुषमाकरः, निदाघइव क्षणदामोदितदामतिः, ममूदकालइव नल

चन्द्रमरीचिरुचिरः, शरदागम इव बन्धुजीवामोद बन्धुरः, हिमसमयइव नमज्जन प्रीतिदायकः, वैनतेय इव विहिताहितापकृतिः, उन्मदमातङ्गइव दानवारि विभासितकरः, वारिधिरिव वेलास्फुर्तिश्लाघनीयः, कासारइव द्विजराजिराजितवनः, धवलदलाष्टमीतमी समयइव भालेन्दुशकलमनोरमः, लोचनविशदीकृत आनन्दवर्धनोदितोध्वन्यालोकोवा, शुकनाससम्भासितः कादम्बरी प्रबन्धो वा, अधिगमिताधरप्रतिबिम्बबिम्बकास्सिद्धान्तलेशोवा, शशिवदनोपेतोवृत्तदर्पणोवा, मणिस्रगालिङ्गितसुग्रीवः प्राचेतसो च्छासोवा, विपुल स्कन्धबन्धो भागवतं वा, मण्डनविकाशितहृदयो मैत्रेयीब्राह्मणोवा, विततबाहुशाखोवेदोवा, जङ्घाकाण्डमण्डितः पारस्करसूत्रसञ्चयोवा, चन्द्रकान्तललितपद्दोपस्कृतः पिङ्गलागमोवा ।

कामदर्शनः इष्टदर्शालोकनः मदननाशकनयनश्च । न देशजा प्रणय विषयः देशीयानामप्रणयस्यन विषयः नदेशा द्रब्धेर्जातायाः रमायाः प्रणयस्य विषयः । लोकेशोविधिः, कमलासनं कमलायाः स्थितिः कमलास्मकमासनं च । आम्नायः कुलं सदुपदेशोवेदश्च, एतेनमीनावतारसादृश्यं दर्शितम् , एवमेवाग्रेपिकूर्माद्यवतारसादृश्यं वेदितव्यम् । गोपिनानन्तः रक्षिता अनन्तापृथिवी अपरिमेयजनाश्च येनसः । गोत्रंकुलम् गोत्रा पृथ्वी । हिरण्यास मदः कनकज्ञानदाता हिरण्याक्षाभिधानस्यासुरस्य खण्डकश्च । बलिः करः

वैरोचनिश्च । बलं सैन्यं शक्तिश्च, राजाभूपः क्षत्रियश्च । मार्गणः याचकः शरश्च । उग्रसेनामोदनः तीक्ष्णसेनायाः उग्रसेनाभिधानस्यचामोदनः । अशेषक्षणभावः सकलोत्सवभवनं सकलेषुक्षणिकत्वंच । ज्वलनहुतयवनमदः ज्वलनेऽग्नौ हुतयवः नमदः हुतः यवनानांमदोयेनसच । वसुधा राज्यं पृथ्वीराज्यं वसुधारासम्बन्धिघृतं च, छायाकान्तिः सूर्यप्रियाच, योगी योगाभ्यासी अवियुक्तः कामोच । व्योमाङ्गनाश्रितः व्योमांगनामुमा मोकाशाङ्गणं चाश्रितः । उदयानुरक्तमण्डलः उदये वृद्धौ प्रकाशविशेषेवा अनुरक्तं मणयि रक्तवर्णंच मण्डलं प्रजामण्डलं चक्रवालं वा यस्यसः वर्णन इति पतित्वेन सुतत्वेनच बोध्यम् काव्यं कविकर्मशुक्रश्चकाव्यःज्योतिर्निबन्धे बुधशुक्रयोस्सख्यस्य प्रतिपादनात् । वृन्दारकः सुरःश्रेष्ठश्च । कर्बुर माला चित्रमाल्यं राक्षसपरम्पराच । सौरिश्शनिः विरोचनः कान्तिरहितः सूर्यश्च । क्षणदा उत्सवदा आमोदिनीसतोमागतिर्यस्य रात्रावामोदीसदा गतिर्वायुर्यत्रसच । नखेत्यादि नखरेन्दोः कन्त्यारुचिरः आकाशेन्दु कान्तिरुचिरोनेत्यर्थः । बन्धुजीवः बन्धूनांजीवः पुष्पविशेषश्च । नमेत्यादि नमतां जनानां प्रीतिदायकः मज्जनेन प्रीतिदायकइत्यर्थः । अहितस्यापकृतिः अहेस्तापकृतिः । दानेति उत्सर्गजलविभासितहस्तः मदजलविभासितशुण्डश्चेत्यर्थः । वेला अवसरो मर्यादाच, द्विजो विप्रो विहगश्च, वनं गृहं विपिनं जलं च । शकलं खण्डः लोचनेन नेत्रेण लोचनाभिधानया टीकयाच, आनन्दस्य वर्द्धनाय उदितः आनन्दवर्धनाचार्येण भाषितश्च शुकनासः शुकतुलितनासिकः शुकनासेनसचिवेन सम्भाषितश्च श्लेषे सषयोरैक्यात् । अधरस्य प्रतिबिम्बं बिम्बफलम् अधरः प्रतिबिम्बोयस्मात् तादृशोबिम्बश्च । शशिवदनं शशिवदना तदभिधाने छन्दश्च । सुग्रीवा शोभनकन्धरा सुग्रीवश्च वानरः । मण्डनं भूषणं मण्डनमिश्रश्च खण्डनः

रहस्यं वक्षोरहस्यं च, मैत्रेयीब्राह्मणोवृहदारण्यकम्। चन्द्ररुचिरेण ललितेन पदेन, चन्द्रकान्तललितपदाभ्यां छन्दोभ्यांचोपस्कृतः।

परिपालितप्रजोऽपिनरक्षणकरः, केशवोऽप्यवामनावतारः, परप्रमदाश्लेषितोऽपिधुरीणोधार्मिकाणाम्, प्रोदितप्रतापदहननिर्दग्धद्वेषणसम्भूतभूत्याभूषितोऽपि पूतः, अनेकपनायकोऽपि नगजानुगतः, निरस्तद्विजिह्वोऽपि धरणिभृत्, सवनश्रितोऽप्यवनपरायणः, कुमुदावर्धकोऽप्यक्षयिवस्तु स्तमसानासादितश्च, सकलाशापूरककरोऽपि अमिततुरङ्गमो दोषानभिभूतश्च, लोकेशोऽप्यनाभिजातः, विजितदर्पकोऽपि मनोजवशः, भोगवानपि मन्त्रानुचारिपराक्रमः, अद्वितीयोऽपि द्वितीयानुरक्तः, सुन्दरदर्शनोऽपि कविः, आत्तदण्डकोऽपि परिगोपिताशेषतापसः, मृगयाशीलोऽप्यनाकलितकाननक्लेशः। भीमेनापिशिरसास्वीकृतशासनः, कुलपालिपालनः। वदान्यतमः, सर्वदागृहीततारः। सत्यव्रतः आस्वादितरमणीरसः।

न रक्षणकरः नहि रक्षणकरः नरस्य क्षणकरश्च केशवो हरिः पुंनागश्च, न वामनावतारः अवामनः अखर्वः अवतारोयस्य स च। परप्रमदाश्लेषित परेषां प्रमदया परेण प्रपक्षेनचाश्लेषितः। भूत्याभस्मनाऐश्वर्येण च। अनेकपोगजः अनेकेषां पालकश्च, न गजेनानुगतः नगजामुमामनुगतश्च। द्विजिह्वः सर्पः खलश्च, धरणिभृत् पर्वतो राजाच। सवनं यज्ञमुत

यजनं च, अवनं वनरहितं पालनं च। कुमुदं कैरवं पृथिव्या हर्षश्च कुमुत्, वसु कान्तिः धनं च। तमसाराहुणा अज्ञानेनच सकलाशा समस्ता दिशो, सकलजनानां तृष्णा च। करः किरणः हस्तश्च, अमितेति, रवेस्सप्ताश्वत्वाद्विरोधः, दोषया दोषैश्चानभिभूतः। लोकेशोविधिः लोकानामीशश्च, अनाभिजातः नाभेर्नजातः सुन्दरश्च। मनोजवशः कामाधीनः, पितृसन्निभश्च। भोगवान् फणी सुखीच, मन्त्रोमनुर्विचारश्च। अद्वितीयः:एकमात्रं सजातीयद्वितीयरहितश्च, द्वितीयानुरक्तः द्वितीयस्मिन् द्वितीयायां श्रीतारिण्यांचानुरक्तः। दर्शनं नयनम्, कविः शुक्रः, कवयिता च। आत्तदण्डकः गृहीतदण्डकाभिधानविपिनः गृहीतदण्डश्च, राममादाय विरोधः। मृगयेत्यादि मृगयाआखेटः भीमः भीमसेनः भयंकरश्च, एताभ्यां युधिष्ठिरापेक्षयाव्यतिरेकः। गृहीततारः गृहीता तारा हरिश्चन्द्रस्यजाया भगवती च येन सः, एतेन तदपेक्षयाव्यतिरेकः। सत्यव्रत इति एतेन भीष्मापेक्षयाव्यतिरेकः।

प्रवीरो मङ्गलकरः, परसमाधिसहिष्णुः जिष्णुः। अक्रूरः गोकुलानन्दनः। चन्द्रकान्तः सुकुमारः। सूरतः शूरतरः उपायप्रयोगकुशलः, द्विषद्दलितदलः, कृतलक्षणः, नवपेशलक्षणप्रदर्शनः, विचक्षणप्रतीक्ष्यः, रक्षणमखदीक्षितः स्वच्छयाशयावलक्षः उदारदयेक्षितप्रजः कुलपर्यायप्राज्ञः, रसाभिज्ञः विहितबहुयज्ञः। सप्रतीकश्रुति स्मृतितन्त्रसन्ततिस्वतन्त्रेण, यजनजपनहवनध्यान प्रधानकर्मानुष्ठानपरमपरायणेन, अनुदिनं वदन

समुदयेनहितानि कथयता पृथिवीनाथंप्रथयमानेन, राजानुरागरोहितेन, पुरोहितेन,, धर्मागमगहनसञ्चार-पञ्चाननेन, सदभिजनजननयातेन, शीतलतरशील शालिना, सुकृतसचिवेन ,, सदगारधारकैः स्तम्भैरिः सारसङ्कृतैः, अवृजिनवृत्तिभिः प्रवृद्धैः, असद्व्यसन-महापवनेनाप्यनवधीरितधीरभावैश्च, परार्थानुमानैरिव न्यायानुयायिभिः, शक्तिसाधकैरिव संवृतमन्त्रैः, साधु-साधनैरिव विपक्षाननुवन्धिभिः, कविप्रवरैरिव रहसि पदानि चिन्तयानैः, महामुनिवनैरिवालुब्धैः, गणितनिपुणैरिव देशकालकोविदैः, नीतिविशारदैः, प्रतिभातिविशदैः, प्रगल्भैः, समज्यारञ्जनैः, मन्त्रिजनैः,, दाशैरिव भुवनाशयशयितग्राहकैः, योगिपटलैरिवास्पृष्टव्यसनैः, रतिस्थायिभावैरिव शुचिताञ्चितैः, क्षोणीश्वरैरिव क्षमारक्षकैः त्रिदशा-स्थानकैरिव स्फुरितधिषणैः, यथाभिहितभाषणैः, तृष्ण याऽकृष्णैः क्रोधानवधूतैः, दूतैः,,

प्रवीरेति, एतेन यमापेक्षयाव्यतिरेकः। जिष्णुः जयनशील इन्द्रश्च, एतेनेन्द्रापेक्षयाव्यतिरेकः । अक्रूरेति, एतेनाक्रूरापेक्षया व्यतिरेकः । चन्द्रकान्तः इन्दुसुन्दरः चन्द्रकान्तशिलाच, एतेनोक्तशिलापेक्षयाव्यति-रेकः । सूरतः दयालुः शूराद्वा उपायेति, सामदानादीत्यर्थः । कृतलक्षणः गुणैः प्रतीतः । पेशलः चारुः । पर्यायः क्रमः । प्रतीकः अङ्गम् । सारं न्याय्यं

बलंच सारः स्थिरांशः। अवृजिना निष्पापा अकुटिलाच। प्रवृद्धैः स्थविरैः प्रौढैश्च। न्यायोनीतिः प्रतिज्ञादिपञ्चकञ्च। मन्त्रोविचारोमनुश्च। विपक्षः शत्रुः साध्यशून्यश्च। पदानि सुप्तिङन्तरूपाणि व्यवसितानि च। भुवनं भुवनस्थोजनः जलं च, आशयः आधारः अभिप्रायश्च। व्यसनं कामजः कोपजोवादोषः विपच्च। शुचिता शौचं शृङ्गारताच। क्षमा सहिष्णुता क्षितिश्च। आस्थानंकं सभा, धिषणामतिः, गुरुश्च धिषणः॥

गीर्वाणाङ्गनयेव मनोज्ञरूपया, सत्येव स्वामिनिरतया नागरिकयेव समयेङ्गितज्ञया, शालशाखयेव लसितासितासिलतया, वेत्रक्षेत्रपाण्या, प्रतीहारिण्या, सार्थवाहैरिव प्रधनविधानधुरन्धरैः, ऋषिभिरिव वशीकृत तुरगैः, त्रस्तसमस्तशात्रवैः, अस्त्रशास्त्रशिक्षितैः, वैवस्वतशरासारेणाप्यवशातयितुमशक्यैः, वशितश्रमैः, सैन्यैः, नीतितरङ्गिणीतलस्पर्शिभिः, अदासपाशकैः, त्रिदिवेशैरिव बहुविधवेशविरचनचातुरीचितैः, चञ्चितचेतनैः, चारैः,, करटतटोन्मीलितमदजलझरजातविपुलापगैः, गगनाटविकाटनक्लान्तमार्तण्डहयमण्डलीविश्रामपदाट्टालकप्रासादपुटभेदनद्वारकवाटपटलीविघटनदम्भोलिकुम्भस्थलैः, आक्रमणाप्रस्तावास्तमितारातिस्तोमप्रतापभास्करैः, स्तम्बेरमैः,, प्रलयपवमानसमानप्रयाणकैः, अफल्गुवल्गितैः, अर्वीकृतसर्वशर्वदवस्यायशार्वरैः, सविशेषहेषप्रेङ्खद्बुद्ब-

वैषैः, प्रखरनखखुरोत्खातखर्वीकृतोर्वीधरशेषनिश्शेष समुत्फुल्लफणैः, विस्मापितानिमेषलेखगणैः, समरप्रकरचतुरै स्तुरङ्गैः, अवितथाचटुलचाटुसंलापपटुता मुपगतैः, प्राभ्रूविभ्रमभव्यभाव भाजनैः, लोभानभिभूतहृदयैः, गहनगुरुगणितविज्ञानगेहैः भाण्डागारिकैः, प्रभोर्भालनिभालकै रप्यलालाटिकैः, भक्तिवारिभरितैः, भृत्यैः, रभिराजितः। गिरिराजनन्दिनी पदारविन्दमकरन्दमिलिन्दमानसः, विस्रम्भभूमिः सार्वभौमस्य, घनसमयो जनवनसमवनस्य, पुरोगतः कारुणिकानाम्, अवलम्बश्शूरतालतानाम् आधारदण्डः सुकृतवैजयन्तिकानाम्, प्रालेयशिलोच्चयोऽनेकविवेकमहाभेषजानाम्, कूलङ्कषनदोदीनताद्रुमाणाम्, सन्तानपादपोऽर्थिसन्तानानाम्, तपस्विद्भिर्भारतीयानाम्, लक्ष्मीश्वरसिंहोबभूव ॥ योगुरुरिति कथकैः, उदयनइतिनास्तिकैः, प्रभाकरइतिदोषोत्करैः, दवइतिवृजिनिवंशैः, नासत्यमूर्तिरितियौवतैः कल्पान्तइतिसपत्नैः, रामइति प्रजापुञ्जैः, चिन्तामणिरिति मार्गणै, रगृह्यत।

सार्थवाहैः, वणिग्भिः, प्रधनं युद्धं प्रकृष्टंधनंच। तुरगः अश्वः चित्तंच। वैवस्वतो यमः। वशितः आयत्तः। अदासपाशकैः अनपकृष्टदासैः। कल्पः कपोतः अट्टालकः हर्म्योपरिस्थितं गृहम्। अफल्गु अनिरर्थकं

परिगतं धाराभिधानो गतिविशेषः । अर्वः कुत्सितः, अर्वन् अश्वः, अप-स्यायशार्परैः अभिमानतमोभिः । हेषाशब्दभेदः । विस्मापितेत्यनिमेष-त्वोपपादकम् । भावो भक्तिः, गहनं कठिनम् । निभालकैः द्रष्टृभिः, अक्षा-त्रटिकैः प्रभोर्भालादर्शिभिः अकार्याक्षमैश्च । जनवनं जनानां समूहएववनं विपिनम् । सन्तानतरुः कल्पवृक्षः । गुरुः वाचस्पतिः, उदयनः उदय-नाचार्यः, दोषोत्करैः दोषाणा मुत्करस्समुदायएव दोषाणां रात्रीणामुत्क-रस्तैः । दवोवनाग्निः, वृजिनिवंशैः वृजिनिनां पापिनांवंशः कुलमेव वंशो वेणुस्तैः । कल्पान्तः प्रलयः, उल्लेखालङ्कारः ॥

यो गौरवेणावर्णेनच काञ्चनाचलमप्यधश्चकार । यश्शा-श्वतायशोऽन्धमसप्रबन्धविध्वंसितधर्मानुसन्धानजगति जगतीमातन्वा[illegible]नोऽप्यस्तुयतएव धार्मिकैः । यः सकलकाश्यपीश कमनीयकीर्तिकन्यकथासाकं क्रिय-माणेपरिणयेपिप्रार्थनिजस्थापितप्रोज्ज्वलत्प्रतापपावकं परिपान्थिनां यशोलाजैः । विनाशितवैरिजीवनो ऽपियः पृषतमपि निरसितुं नापारयदेतदीयनारीनयन नलिननिस्सरन्नीरनिर्झरान् । यंच नगरमयमानमीष दपि निशमयन्त्येव काचिद्विलोकयितुकामा निष्का-म्यन्ती निकेतनात्स्खलत्कलं विकलितमपि कनक-काञ्चीगुणं नाकलयत् । इतराच व्रजनजवत्रुटितामपि मौक्तिकावलीं नालोचयत् । अपराच केशपाशनिपतित प्रसूनपटलैः पृथिवीमपूजयत् । अन्या च विनिवृत्ता-

वरणवसनवक्षोजगिरीशसाक्षात्कारेणतरुणाननतिशय-मनायासमानन्दमविन्दयत् । पराचाधिप्रसाधनविधि-विधीयमानार्धविशेषकैव पथिपश्यतां प्रतिपादयन्ती प्रत्यग्रकौतूहलानि तिलकानवसितिंनाचिन्तयत् । किंवहुना, काचिद्गाढमालिङ्ग्यपरिचुम्ब्यमानाधर-किसलया सहसा निरस्यैव स्वामिदृढवाहुयुगनिगड़-निविड़वन्धनं केलिकेतनान्निरगात् । यमोजसाऽ-धिकमवधायातिगाढग्लानिग्लपन्नगोचरीकृतोवाड़वा-ग्निरन्तकामनाश्रितोदन्वदन्तस्सुधावाधितचेताअपि–नितान्तत्रपाभिर्निष्क्रमितुमनीहमानो जीवनकाल-जालं यापयत्यद्यापि । निमीलितेऽपिनयनकमलेक-मलोल्लासकारकं यमालोकयन् लोकाः । येनरुषा विषयीकृतानांद्विषतां नावनीवनीचप्रत्यपादयतां लेशमपि विश्रमस्य । येनसकृदपि सम्भाषिता स्सुक्त-तसारसन्दोहशालिनंस्वमसंशयंश्लाघयन्तिसकलाः ।

प्राग्वेत्यादि, व्याजस्तुतिः, गतिम्अग्निहोत्रादिक्रियाम् । पिप्राय प्रीणातिस्म । जीवनोपीति, विनाशितं–वैरिणो, जीवनमेवजीवनंजलंयेन-सइत्यर्थः । गिरीशः गिरिशाज शिवश्च, अनायास मित्यनेन मोक्षानन्दापे-क्षया व्यतिरेकोबोध्यते । अनवसितिम् असमाप्तिम्, अन्तकामना मरणेच्छा, वाधितचेताइति मरणाभावादित्याशयः । आलोकयन्निति, कमले निमी-लित कमलोल्लासकारकस्यरवेरदर्शनाद्विरोधाभासेन सकललोकहृदय-

तित्वं व्यज्यते । प्रत्यपादयतामिति, तथाच विरुद्धावपितदनुवर्तनार्थमेक-कार्यं कुरुत इतिध्वन्यते । साधयन्ति, अनुमिन्वन्ति नचासंशयपदं नि-ष्फलं, रत्नकोशकारेणानुमितेरपिसंशयत्वस्याभ्युपेतत्वादिति सत्प्रतिपक्ष-दीधितौ स्पष्टम् ॥

यस्मै सकलान्तरीपवर्तिनामसमानसम्मानभारभागिने-स्पृहयन्त्यशेषभूमीभुजः । यस्मादधिकद्वयकलत्रसस-तिकलाकुशलताकलितकीर्तेः कुत्सा निकारं कलय-ल्लुचोलाञ्छनच्छलेन श्यामलिमानंदधानश्शशधरः प्रसाधयत्यधुनापि षोडशकलोहरिपदंकराम्रुतेः । लक्ष्मीश्वरं वीक्षितुमिवविच्छातेन कासारकेतवात्प्रका-शतेसरस्वतासोत्सालयेवहृदयस्थितपुरुषोत्तमा, हश्य-रत्नभूता, मदोत्कटकटघटितकरटिघटाभिङ्घटिता, कनक कान्तिकनिता, दर्शितदुर्गतोदारदरभंगा, दरभंगा-भिधाना यस्य प्रधानराजधानी । यस्य न वासवस्येव दुस्सहपरतपस्यानि शीलानि, नवा गाण्डीविमण्डल-स्येवच्छललांछितानि चरितानि । यस्य कीर्तिरेव सकल कालमालोककारिका, आचाररक्षणं क्षणदासु प्रदीप-न्यासः, विद्याव्रततिकुसुमामोद एव घ्राणसन्तर्पणः, सुषमैकफलानि वकुलकमलकेसरकुलानि, एक विक्रम एव परमस्सहायः, राजश्रीविचेष्टितमनुचरप्रपञ्चः, तारिणीगुणमानमहणमेवभवपालङ्कारः, भारभूते

विविधमणिकिर्मीरिते कुण्डले, निपतिताः कामिनीनां मेचककच्छटाः कटाक्षाएव विकचकुवलयवलयविरचिता मालिका गुणवदनुरागितामनुमापनं मरकतमणिमाल्य-परिधानम् । सदुपभोगेलिमापरिमितरत्नरमणीयता-मवसाययस्मिन्नसोढशोकस्यदक्षोभतस्सापस्मारइवे-दानीमपि विजृम्भतेऽम्भोनिधिः । यत्रच धरित्रीशा-सनाधायके राजविरोधिताध्वान्तेषु, सद्वृत्तमुक्तता हारेषु, भोगिविद्वेषः शिखावलेषु, न लोकेषु । उत्तर-लतावादेषु, कुटिलता तरुणीविलोकनेषु, भक्तिभङ्गो विलासिनीकपोलेषु, नस्वान्तेषु । सीमाविवादःशास्त्री यकल्पनेषु नक्षेत्रेषु । शब्दानुशासनेऽपवादः, माध्य मिकदर्शनेशून्यवादः,न्याये प्रतिज्ञाहानिः,समासेविग्रह विचारः, किञ्चावसरिकवृष्टिसृष्टिकारिताम्बुधरेषु, सामायिकविपुलशालिशालिता केदारेषु, सम्भृतप्रसव ता पादपेषु पूर्णकामता प्रजास्वासन् ॥ क्षितिभृत्पक्ष विच्छेदनाय पावेयपरमाणुभिरिवोदपादयद्यदीयदृढ-विग्रहं वेधाः । यदवलोकनकालविगलितवीटिकानीवि बन्धना युवतयोऽभूवन् । चिराय माधवं साधयन्नपि ना द्यत्वेऽपि दधातिसहस्रदीधितिर्यदीयप्रतापतुलनाम् ॥ ❀ ॥

अन्तरीपं द्वीपः । निकारं परिभवम् । हरिपदमाकाशं विष्णोश्चरण-ञ्च । करामृतैः करजैः किरणैरमृतैश्च । विच्छेदेनायासेन हृदयं

मध्यदेशोमनश्च । पुरुषोत्तमः पुरुषेषु उत्तमः हरिश्च । कनिता दीपिता दरभङ्गोभीतिनाशः । गुणवत् माल्यं गुणीच । स्यदोवेगः । राजा चन्द्रः भूपश्च । सद्वृत्तमुक्तता समीचीनवर्तुलमौक्तिकता समीचीनाचरणत्यागिताच । भोगी सर्पः भोक्ताच । शिखावलो मयूरः । उत्तरलता समाधानपरम्परा चाञ्चल्यञ्च । भक्तिः रचनाविशेषो देवादिविषयिणी रतिश्च । शून्यवादः विषयविषयिणोरसत्त्ववादः अर्थशून्यमभिधानं च । प्रतिज्ञाहानिः प्रथमं निग्रहस्थानं, प्रतिश्रुतेर्हानिश्च । विग्रहः समासार्थप्रतिपादको वाक्यविशेषः रणश्च' क्षितिभृत् राजा पर्वतश्च, पक्षः सुहृत् गरुच्च पार्थेयपरमाणुभिः वज्रारम्भकपरमाणुभिः, वीटिका कञ्चुकी, माधवं नारायणं वैशाखमासंच ॥ ❁ ॥

यस्यानुजो हरइव परमदनाशनः, केशव इव क्रमोपचितकीर्त्तिकायः, भार्गवइव सदाराधितशङ्करचरणाङ्कजः, दासरथिरिव विदेहजानन्दनः, धर्मइवकृष्णालङ्कृतालयः, सरस्वानिव शिशुमारमनोरमः, सरोजन्मस्तोकइव भ्रमरहितः, उपवनप्रदेशइव तिलकालितप्रियालपनसप्रमोदः प्रलयप्रभञ्जनइव धरणिधर प्रकरकम्पकारकः, कासारसाइव सप्रसादानिमिष विसरः, ब्रह्मविवदिषइव विजितविषयोपायचतुष्टयोपेतः, ज्योतिषनिबन्धइव विवस्वन्मङ्गलविकाशकः, जैमिनिमुनिरिव शक्तित्रयसाधकः, गोविन्दविग्रहइव गुणाक्रान्तकुवलयः, संयमितचेताइव संजातानेकसिद्धिः, गगनाभोगइव लक्ष्मणाग्रसतानुगतः, हिम-

समयइव बहुधान्योपकारकः, मल्लमण्डपइव सर्वतोभद्र-भासितः, चन्दनाचलइव चक्रिचित्तचौरः, वैदेहप्रदेश इव सफलसवनः, अन्तर्मातृकान्यासइव सन्मूलमणि-पूराधिष्ठानानाहतविशुद्धाज्ञा चक्रचञ्चितः, हरि-हृदयस्थलइव बहलसस्मेरकाश्मीरजन्मासेवितः, नन्द-ननन्दितोऽप्यपारिजातः, विवर्धितबाणविग्रहोऽपि विश्वकेतुः, धनदोऽपि सुन्दरकलेवरः, स्थिरास्थितोऽपि सुधर्माधिपः, गुणाकृष्टभुवनोऽपि पद्माकरः, मन्दाशान्तिरप्यविरोचनः, अस्तमितसमस्तेतिहासोऽपि सम्मानितसकलेतिहासः, निस्सपत्नोऽप्यधिकारिताम-वासोऽभ्युदयकृत्येषु, चरणानाहतद्विजमण्डलोऽपिप्र-थमकीर्तनीयस्सुकृतिनां कलापेषु, काञ्चीपरिवीक्षणा क्षिप्तवामाक्षीकोऽप्यक्षो णिरेवाक्षिणाम्, घनधूमधाराध्व स्तातपोऽपि सुरभिः, कृष्णपक्षप्रियोऽपि कलाकरः, शूरोऽपि शुचिरुचिः अचलोदितोऽपिबुधः, गुरुरपिकविः, कालीदासोऽपिगुणाढ्यः, शातवाहनोऽपिगोवर्धनः, वर्धमानोऽपि पार्थसारथिः, सिंहसंहननः, सहनः, धन्यः राजन्य मान्यः, वर्णि वर्ण्यः, धरणिपाग्रगण्यः, सत्क्रियासुलीनः, विश्वजनीनः, सुकलः शुक्लकुलः, कूकुदः, कलितककुदः, सफल प्रस्तावकः, अनन्त-संस्तावकः, परिशोषितानघसकः, दशाध्वरदहन-

दग्धादभ्रदेशितद्रुदारुदलदीर्घशूकः, स्थूललक्ष्यः सूक्ष्मेक्षणः, क्षोभितविपक्षः, विक्रमविलक्षीकृतक्षितिपलक्षः स्वक्षाश्रितः वलक्षाशयः, असमसमज्ञः व्यङ्ग्य विशेषज्ञः, कृतज्ञः, प्रथमपोतलपितप्रवृत्तिप्रोतसंज्ञः,

परोऽन्यो रिपुश्च, मदो गर्वो हर्षश्च, अन्यत्रमदनेतिच्छेदः । विदेहजो मैथिलः, विदेहजा सीताच । कृष्णः वासुदेवः कृष्णा द्रौपदीच । शिशुमारः स्मरोपमोवालः, जलजन्तुविशेषश्च । भ्रमोऽन्यत्रभ्रमर इति । हितस्तत्कारकः अतएवपुंस्त्वम् । प्रियालपनं परत्र प्रियालपनसौ योज्यौ । अनिमिषोदेवो मीनश्च । विषयोदेशः रूपादिश्च, उपायस्सेना शमादिसम्पत्तिश्च । विवस्वान् पण्डितः सूर्यश्च । शक्तित्रयं काल्यादि आधेयशक्त्यादिच । कुवलयेति पृथ्वी मण्डलंनीलकमलंच । सिद्धिः प्रभुमन्त्रोत्साहाख्या मनोजवित्वादिश्च । गगनाभोगोविस्तृतं गगनम् । षड्गुणाः सन्ध्यादि संख्यादि च । चक्रीहरिस्सर्पस्सार्वभौमश्च । सवनं यागः परत्रफलसानां द्रुमविशेषाणांवनमिति । अधिष्ठानेतिच्छेदः चक्रं समूहः, मूलेत्यादि आज्ञान्तानि कमलदलानि शरीरान्तःस्थितानि तत्तन्नामधेयानि चक्राणि । काश्मीरजन्मेति काश्मीरजातः कुङ्कुमं च । नन्दनेति इन्द्रोद्यानं हर्षकारितनयश्च । अपेति परिहारे च्छेदः । विश्वकेतुः प्रद्युम्नः, जगत्पताकः जगत्पताका च । स्थिरापृथ्वी स्थिरोमुक्तिः जीवन्मुक्तिरितियावत् । भुवनं जलं जगच्च । मन्दइशनिर्भाग्य रहितश्च विरोचनः सूर्यः कान्तिशून्यश्च । ईतेर्हासः इतिहासश्च क्रमेण बोध्यः । अधिकेतिभङ्गः । द्विजोविप्रश्चन्द्रश्च । काञ्ची रसना तदभिधा नगरीच । आक्षिप्ता गृहीता हृष्टाच, वामाक्षी वामलोचना देवीच । अक्षि-लक्षण् । सुरभिः वसन्तः मनोज्ञश्च । कृष्णपक्षः श्यामकण्ठो वासुदेवभक्तश्च

शूरस्सूर्यो वीरश्च शुचिरुचिरिन्दुः, शुचीतिशुक्ल पवित्रयो, रुचीति कान्तिलिप्सयोर्बोधकं च। अचलोदितः कुजःस्थिरवृद्धिमांश्च । शातेति भङ्गः सुखार्थकः, वर्धमानः तदभिधानः दार्शनिक पण्डितः वृद्धिमाप्नुवानश्च, पार्थ सारथिः तन्नामा मीमांसकेशः भक्ते समर्थसारथिकः । मुकुलोदाता भोक्ता च, ककुदं प्राधान्यं राजलाञ्छनं च, अनन्तोहरिरपरिमितश्च ।

नगनायकतनयाचरणमरालमिलितमानसः, देशकदम्बकप्रविदितोदारतोद्रिक्त दानोदकनदी दूरीकृतदृढदीर्घ दैन्यद्रुमः, द्रविणप्रादेशनामोदित द्विजन्मदम्पति समुदय हृदयदिश्यमानसमुदयः, सत्तमाशनासनकौशेयांशुक मुकुरमसृणमांसलमरकतकमलरागमणिमौक्तिकप्रवालहारकार्त्तस्वरश्वेतालङ्कारप्रकार परिष्कृतकुमारिकानिकरः, अवलम्बो ब्रह्मवर्चसानाम्, निधानं सुजनतासुधानाम्, बीजं सुकृतशाखिनाम्, निदाघवासरो वैरिजीवनानाम्, उच्छ्वसितं भारतोत्साहानाम्, कुलरिपुः पाषण्डानाम्, अग्रणीरन्तर्वाणिकानाम्, पुण्यपरिणतिः, प्राणिपटलानाम्, खण्डबलाकुलाकूपारकौस्तुभमणिः, अभिघातिगहनाशुशुक्षणिः क्षोणीपतिः श्रीमान् रमेश्वर सिंहः ।



मानसं मनस्सरोविशेषश्च । जीवनम्प्राणनं जलञ्च । अन्तर्वाणिकः शास्त्रवित्

यो नवयौवनावतारे पुण्यपदावलोकनकुतूहला-कुलितहृदयो भूयो भुविभ्रमणेन सैकतक्षोदरुचिरदक्षो-दधिरोधः प्रसाधिकामारभ्य कुमारिकामाप्रालेयालय शिलोच्चयमाचनीलाचलाच्चण्डिकाचरणचंचिताद्यावद् द्वारकां विद्यमानेन पवित्रयांचकार कलेवरं तीर्थ जातेन। गमनगोचरीकृतार्णवाभ्यर्णगोकर्ण स्तीर्ण-सागरो गोत्राण्यपि जगतीसागरादुदतारयत्। यो दिवसनिशेविभज्यकृत्यव्रजाय सायामयामास्वपि त्रि-यामासु घटिका त्रितयमेवानुकम्पते स्वापेन। यः परिपन्थिपशुभूति भीत्यैवचोररीचकार राजलक्ष्मीम्। यः स्तोकतोऽपि पुण्यप्रतीपपतितान् प्रेयसोऽपि नियमयति। यो वसुधानुशासन विशारदताप्रसा-दिता दशहृशसन्तोषभाजसम्राजस्सकाशान्महाराजा धिराजपदवीं प्रथमापत्यपरम्पराप्रापिकामुपार्जिजत्। यो द्वैपायनदेशनादर्शितसंविधानैरशेषाम्नायसङ्कल-यावताधिषण माश्लिष्यन्त्यां पुष्यतारकायां कारिता-भिषेकः सुषमामभिनवामेव पुष्यन् सविशेषमाराधय-ति कृत्यकृतमुखान् मनीषिणः। यआदितस्त्रयोदश एव दिवसेवशेनेन्द्रियदलेन विदितप्रथतनक्ताशन-स्स्वस्तिकासीनोऽक्लेशलेशं महाभारतपारावारपारं प्रापत्, यच्च चिरचकितचेतसां तिरश्चहार चपल-

वाचकतोचितमभिमानं विपश्चितां निचयस्य । यो होमस्तोमकोटिपटितकोटिप्रमित स्वतन्त्र मन्त्रणा नियन्त्रणाहितसावित्रीमन्त्रहोमापरिमितश्यामामनुज पनविगलितकलिमलामतिमेध्यतयाऽऽमोदिनीं मिथिलामेदिनी मतनोत् ।

विबुधधुनीस्रोतः प्रतिरोधकमधरीकृतधराधरं नीहारमहीध्रसविधवर्तिनं ह्लादिनीहृदेर्हृषद्भिरावद्धं जगदनुद्धारहेतुं सेतुमेदं विच्छेदयन्नापादितप्रसन्नतालत्ताप्रतानविततातिनिनताशेषजनताकृतार्पणा कर्मधर्मरत्नाकरोपाधिमधिदधानोविस्मृतिपथपथिकं यः प्रथितकथमगीरथमकरोत् । यस्सहपूर्वाविर्भवान्ववायैः प्रोद्धृतमाच्याचलपदे प्रतिष्ठापयांबभूव शोभनं भवनं भुवनेशीपदाम्भोरुहेरणाम् । योऽपचितपुण्यपादपेषु पदेषु पीडां साधारणतरेणाऽपि नरेणसोढुमशक्यामीप द्रष्ट्वविगणय्य सत्स्वप्यनिवार्यराजकीयकार्यवर्येषु माध्वीकाधिक माधुरिका ध्रूतवाग्मिधौरेय व्यलीकविख्यातव्याख्यानतः किल्बिषाभिनद्धबुद्धिसामान्यसमुद्धारबद्धप्रतिज्ञोविशुद्धतमामाधाय श्रद्धालुतांसद्धमंवर्धनेन समस्ताराद्धचरणसरोरुहो विजयते जनपदेषु सकलेषु । मिथिलामगधाङ्गकामरूपपाञ्चालादिदेश संहतौ निष्पादिते सकललोकलोचनालाने निलयनि-

करे प्रतिष्ठापितदेवतोऽपि यस्ततो लेशतोऽपि तोषं मनागप्यलभमानस्साधयतिसाधुसौधं सुधाशिनां शिल्पिसारैः। जीर्णोद्धरणकामनया च मृगयते पुरातनं केतनं तेषाम् ।

नियमयतिदण्डयति । द्वैपायनदेशना मीनपुराणम्, दलेनेत्यत्रोपलक्षणेतृतीया । कोटिरग्रम्, कोटिः संख्या । प्राच्याचलपदं नीलाचलः पुरातनाव्ययपदं मोक्षइतियावत् । साधयति निर्मापयति, सुधाशिनां देवानाम्, सारैः श्रेष्ठैः ।

विलुप्यमानातिसनातनसुकृतवनावनाय प्रयतमाना भारतधर्ममहामण्डलाभिधाना महासमिति र्यमेव प-तितयाऽवृणोत्सत्यपि सुवेशविशदवसुराशिराजितेऽपि राजके । यमतिशयेन शाम्भवनगरहृदय विश्व विद्यालयारम्भमूलस्तम्भभूतं सम्भावयन्ति विश्ववा-सिनः । मन्त्रन्यासभीता नोपसर्पितुं प्रभवन्ति यं परभुजङ्गमाः । यमेवचोपजीवति परिणये शास्त्रविषये च भवन्ती जातिमीमांसा । यमालोकयास्तोकसतोकस्थविरलोकोदीरितैः जयजय महाराजाधिराजेत्यालोकारावकोलाहलैरनवकाशतामासादयत्याकाशम् । वासरावसाने विहरणार्थवहिरारहितमाकर्णयन्तएवपरिहृतस्वकृत्या श्शृङ्गाटके यमभिवीक्षितुमितस्ततोनिक्षिप्तचक्षुषो मिलन्तिजनास्तत्र तत्र नगरेषु । चातकवदा

चरितानिच प्रासादवलभी विभूषयन्तीनां भवन्ति वदनानिकामिनीनाम्, कुवलयमयानिचायनान्तिक-निलयवातायनानि लसन्तिसुन्दरीनयनैः । येन प्रकृतिभावं प्रापिताअपि नैवसन्धिविधुराः । येन समुदायशातितशरीराअपि शात्रवसमुदायाश्शूरमण्डल भेदिनो वभूवुः । येन सप्तधाऽधुनावधिश्राद्धमधि गयमाविधाय पितॄननीयतातुलातृप्तिः, येन भूयसा निशासु साक्षात्क्रियन्ते परमप्रीतिपद्धतौ समासीना-आशीराशिविश्राणनपरायणाअङ्गागताः पितृ-गणास्स्वप्नेषु । येनानेकत्रकल्पिताश्चिकित्सालयोवि-द्यालयोब्रह्मचर्याश्रमश्च मानवानुपकरोति नितराम् । यस्मैगुणश्रवणासाक्षात्करण प्रवणान्तः करणेन विती-र्णा सार्वभौमेन जी. सी. आइ. ई. के. वी. ई. इतीय-मूर्वीपति दुरासदार्थगुर्वी वहुमानं प्रमापयन्ती पदवी प्रमोदतेऽतितराम् । श्रणीनश्रोत्रियपरिणयसिद्धा-न्तरीति सन्निवन्धाय यस्मै व्याहृतानि श्रोत्रियसन्त तीनां वितरन्ति शंततं सततम् । यतः कथा प्रसङ्ग-सङ्गतममङ्गलाभिषङ्गकरं पुराणकदम्बकोदन्तमाक-र्ण्य कौतुकादेव पौराणिक धुरीणतामुपगतास्तत्सवे शासिनः । क्रतुशतविहापितस्वापते यस्य यस्यद्रविण-हीनतां वलन्ति प्रत्यर्थिनः । यस्य शासनेनसमन्ततः

श्रूयते सुकृतसारा सरस्वतीसमेषाम् । यस्य भूमीपतितया युक्तैव मङ्गलजनकता, क्षमापतितयाच न क्षमात्यागिता । त्रिभुवनव्यापिका कीर्तिरिति त्रिगुणात्मिका मूलप्रकृतिः प्रत्यक्षीकृतेति त्रिजगतां शिरसिराजत इति पिशुनयद्भिरिव कश्मलंस्मयमाने र्भस्मत्रिपुण्ड्रकैः पुण्डरीकशोभै र्विभातिभालभागो यस्य । यत्र जलजाऽपि विवेकवती वर्ततेलक्ष्मीः । यस्मिन् शासतिरसां व्यभिचारिभावोरसेषु, कलिविकाशः किसलयेषु, पारशवतां शस्त्रेषु, नलोकेषु । नयनकोणशोणिमा अध्वरानुबन्धिना धूमेन न क्रोधेन । करादानं केदाराणां नान्यदाराणाम् । नीवीविस्रंसनं सुरतेषु सुन्दरीणां, नव्यवहारिणाम् । रतिकौतूहलेषु नागपदाक्रमणं, प्रमदायाः पुंवद्भावश्च । भाद्रपदे संक्रन्दनदर्शनम्, शिशिरेखलोन्नतिः । दारुयव श्वाससन्तान समीरणैः सन्धुक्षितः काष्ठाधिष्ठितोऽप्यदारुदाहकोयस्प्रतापपावकः प्रमाणीकृताम्नायं जनयते नयनसलिलं दारुयवसीमन्तिनीनाम् । यदप्रियमीहमानोऽपि स्वपदच्युततयाजलनिधितामाससाद । यदीय सौन्दर्यसारदर्शनसुखास्वादसौहित्यसाहित्यशून्या इव सारसासनसदाशिव सेनानी सुनासीरा स्समधिकानिमिषनेत्रता मयासिषुः । यदाचरितचरणचतुष्टयाञ्चि-

त कुम्वानिकुरम्वावृत तड़ागतल्लजाध्वर कुण्डप्रकाण्ड-मण्डलीप्लुष्यमाणेन्धनोद्गच्छच्छ्यामलच्छविधारिधूम-धाराध्वान्तसंजातधवलधामयशस्सुधानिधि रनारतं समुद्भासयतिभुवनोदराणि। यत्समरसमज्ञां सपत्ना अपिनापह्नुवते किं पुनस्सुहृदः॥

मन्त्रो विचारो मनुश्च। आलोकारावोजयशब्दः। आरहित मागत-म्। प्रकृतिभावः सचिवत्वं व्याकरणे प्रसिद्धः सन्धिविरोधी। समुदायो युद्धम्, शूरमण्डलं वीरसमूहः सूर्यमण्डलं च युद्धेमृतस्य सूर्यमण्डलपथेन गमनं भवतीत्याशयः। अभिषङ्गः पराभवः। द्रविणेति धनपराक्रमयो-र्बोधकम् मङ्गलपदन्तु ग्रहभेदकल्याणयोः। क्षमापृथ्वी तितिक्षाच। जल-जा अब्जजाताजलाज्जाताच। व्यभिचारिभावोऽपराङ्गनागामित्वं निर्वेदाद-यश्च। कलीति पापकोरकयोर्वाचकम्। पारशवतःशूद्रायां विप्रतनयताऽस्त्र-ताच। नीवीमूलधनमपि। नागपदेति गजचरणः सुरतासनविशेषश्च। संक्रन्दनेति रोदनकरोवासवश्च। कोष्ठेतिशरुदिशाच आम्नागमिति, अग्नेरापइति श्रुतिरित्यर्थः। स्वपदच्युतः स्वपन् अच्युतोयत्रसः स्वपदा-च्च्युतश्च। जलनिधिः अब्धिः अतिशयेनाढ्यश्च। कुम्वा गहनमावरणम्॥

सचासौतयालक्ष्म्यापरमोदारगुणपरम्पराभिराक्षिप्तो-लक्ष्मीश्वरसिंहः क्षोणीपरिवृढस्तातानुमतंतामुपयेमेऽनु सरन् स्वकीयकुलक्रमादागतां व्यवस्थाम्। ततोऽति-मेदुरेण प्रणयेन पेव्यमानस्य प्रेयसः प्रेष्ठतां शर्मिष्ठेव ययातिभूपतेः प्रयातिस्म। अथ सास्मितसुधासिक्त-

मूर्तिरधरकिसलयाश्रिताङ्कुशानुशिखामिव व्याहृतिभि-श्श्रुतिमुद्दीदिपल्लक्ष्मीश्वरस्य । अभिनवप्रभासलिल-प्रवाहमञ्जुला त्रिवलितरङ्गसङ्गता नाभिसमावर्तिता लोमावलिशैवला प्रतिभासिताङ्गुष्ठनखवदनानेकचन्द्र-चक्रवाला लोचनवैसारिणविचेष्टिता व्याकोशशय-कुशेशया तरङ्गिणीव रराज । क्षितिपलक्ष्मीश्वरवक्ष-सिस्थिता सरससुमनोरमणीया प्रौढगुणगुम्फिता-प्रबोधितमन्मथा तरुणिमतरणि मोदिताशेषप्रतीका सुललितसन्निवेशा अभिसुरभितप्रदेशा आनन्दिता-लिमण्डला मालिकेवविललास । शुचिरसभरसम्भृता त्रिवलिसोपानशोभिता विलसदास्य सारसा प्रियलो-चनरोलम्बावलम्बिता हंसक्वणितनीतरामणीयका सर सीव समास । गुणव्यासभुवनाऽपि लक्ष्मीश्वरैककल्प पादपालम्बिनी प्रियप्रयणपल्लवावलिपूरिताऽपि अप-र्णाश्रिता, नववल्लरीवचकाश । दोषाकरेणादृश्याऽपि द्विजराजलोचनप्रसादिनी, शुचेरगोचराऽपि शुचि-हूयमानशतदला, स्मितविषयीकृताधराऽपि पतिव्रता, समेखलाऽपि द्वेषादूषिता दिदेव । यशसाजगतीषु, चेतसाप्रियनिदेशितेषु, भक्त्याभवानीपदाम्भोजेषु

---

(१) मरोत्सीदिता इत्यपि वा पाठः ।

दानेन द्विजातिहृदयेषु, अनुज्ञया परिचारिकासु एकाप्यनेकधाभूतविभागेव वभ्राज । तस्यास्सुरभिमासयुगं तदा पलमिव पलायतेस्म, प्रणतसतीचिकुर चञ्चरीकसञ्चयरुचिरंचिरं चरणाम्बुजं रुरुचे इति ॥

इति मैथिलश्रोत्रियश्रीबालकृष्णमिश्ररचिते लक्ष्मीश्वरीचरिते पञ्चमोच्छ्वासः ॥

पेव्यमानस्य सेव्यमानस्य, व्याहृतिभिः वचनैः भूःस्वाहेत्यादिभिश्च । श्रयोहस्तः. सुमनः पुष्पं शोभनं मनश्च । गुणः सौन्दर्यादि दामच, आल्पीः सख्यांः अलेश्च मण्डलम् । शुचिरसः शृङ्गाररसः प्रीतिरिति यावत्, शुक्लजलं च । हंसकः पाद कटकः मरालश्च. समास रराज । अपर्णाश्रिता न पर्णाश्रिता पार्वतीमाश्रिताच दोषाकरेण चन्द्रेण द्विजराज श्चन्द्रः लक्ष्मीश्वरसिंहश्च, शुचिः सूर्योऽनलश्च, अधरोनीचः अधरोष्ठश्च, समेखला समेसाधौ खला रसनान्विताच । युगं द्वयं कृतयुगादिच ।

इति पञ्चमोच्छ्वासटिप्पणी ।

## अथ षष्ठोच्छ्वासः ।

साचैषाऽनश्वर शोचिषा यशसा शारदशशिजित्वरी श्रीलक्ष्मीश्वरी सौवर्णकलसोल्लसित सौरसरितसलिलै-रनुमासं वसुमतीक्षुरेण समानायितैः कर्पूरपूरपेषितपा-टीरपंकपृक्तैः प्रतिवासरं लेशतोऽपि स्नेहसामान्यम-स्पृशन्ती स्नाति विधिदेशितैः प्रकारैः । तृणकतुलि-तां तनुमनुमन्यमाना पूजनजपध्यानदानाद्वैतवेदान्त-विद्यानिपुणपुण्याचरणचणजरत्पूर्णपौराणिक श्राव्य-माणपुराणाकर्णनैः, क्वचनदिवसे पायसेन पानेन क्व नचफलमूलाशनेन, कुहच नरजन्या मदभ्रदर्भगर्भायां, कुहचनच कुरंगचर्मनिर्मितायां शयनेन शय्यायामति तिवाहयति दिवानिशम् । नह्विवर्ततेव्रतमुपोषणोचि-तं किमपि, यदनया नसम्भावितं तेन, मध्यमाङ्गुलि-चरमलेखा मेषा नाममात्रशेषतामापिपतजपनीय कुशमूलादिमालिकाऽवर्तनैः । यस्यानयने कान्ति-विलोकने, श्रवणे कथाश्रवणे, वदनं गुणकीर्तने, रस-नं पदसारसरसस्वादने, मानसमनुचिन्तने, करौ परिचरणे, चरणौ प्रदक्षिणे, धनमुद्धवसं विधाने, नारायणस्य परायणान्यासते । या शिविप्रकृतिरिव सदासदया, सन्ध्येव वन्दनीया, कादम्बिनीव समानि-

स्कृत शतह्रदा, स्वर्णदीव स्वर्णदायिनी, प्रावृडिव दानोदकार्द्रा, परशुरामसंसिद्धिरिव परस्वधवल प्रमुदिता, अदितिरिव ( नागनगरीव ) अनन्तास्तिकाञ्चिता, अभीष्टकम्बलावस्थितिश्च, विष्टपसृष्टिरिव सत्यकाधिष्ठिता, सौदामिनीवकन्दाश्रया, आयुर्वेदविद्येव विज्ञातगिरिजागतगुणा, मधुसूदनशेमुषीव जीर्णोद्धारविधायिका । काननइव शालग्रामश्याम लेमन्दिरे चिरेणावासमातन्यमाना, मुनिभूमिरिव सरलब्राह्मणीसेविता, विश्वोपासिताच, समीरसखशिखेवोदर्चिष्मती, कुलशैलसंहतिरिव सुस्थिरस्थितिः, आन्विक्षिकीवरक्षितानेकजातिः किन्त्वदृष्टदृष्टान्ता, वैशेषिक ( काणाद ) शिक्षेव सविशेषगुणा किन्तुद्वेषकलुषाभ्या मदूषिता, समीक्ष्येव सत्प्रकृतिमहत्तत्वविमर्शिनी सत्कार्यसाधनीव, किन्त्वनभिमाना तमसानासादिताच, योगानुशिष्टिरिव निर्विकल्पनियमविशिष्टा, किन्तु क्लिष्टवृत्तिपटलास्पृष्टा, मीमांसेव स्वतः प्रामाण्य माश्रिता महामनाश्च, किन्तु श्रुतिसबल वाक्या आर्थभावनाशून्या स्वप्नेऽपि शबरेणागृहीताच, वेदान्तवागिव विवर्तमानविश्वा, किन्तु श्रुति मायावादरहिता । व्याकृतिरिव वर्णसाधुताव्यापृतप्रक्रिया, प्रत्याहारसहिताच, किन्तु गुणवृद्धिबाधविधुरा,

साहित्यविद्येव सद्रीत्यनुकूल समासोक्तिसारदीपको-दात्त समविशेषगुणसमुच्चया, किन्तु प्रतीपव्याजोक्ति-पतत्प्रकर्षतामतपरार्थताभिरघटिता। दण्डकानास्थि-ताप्यनसूया, स्पृहणीयविवेकपूर्णाऽपि समीकृतनेकव-र्णा, वामाऽपिदक्षिणा, विलक्षाऽपि शालीना, कुलीना-ऽप्यकौलीना, अवसुधाऽपि मङ्गलस्यजननी, कर्णा-नन्दकरेणाऽप्यर्जुनचेष्टितेन विश्रुता, गृहीतविग्रहाऽपि कलिविगलिता, सुप्रसादितपरिजनाप्य प्रसन्नाश्रिता, सर्वमङ्गलाऽपि विभवस्थिता, क्षमोपरिस्थिताप्युद्धृता-नन्ता, अगुरुपूजनपराऽपि गुरुपूजनरता, शीतल-शीलाप्यशीतला, द्वितीयास्थितिमत्यपि दशमीस्था, मरुमेदिनीकामकीलालस्य, ह्रदः क्रोधवैश्वानरस्य, अधिमासो लोभाध्वरस्य, मध्यवासरो मोहतिमिरस्य वि-भावरी दम्भप्रचण्डमार्तण्डोदयस्य, शैलेयशकलमह-ङ्कारानोकहाङ्कुरस्य, गगनमालवालं स्पृहालतायाः, विष्टिसमयो मायाप्रयाणस्य, केरलकाश्यपी ईर्ष्याग्नि-सूचिकायाः, कृतनिर्यातना, नव्यसना, वृसीसमासी-ना, अकुहना, अशौष्कला, नत्यक्तनक्तव्रता, नन्दि-तबन्धुता, वाचं यमा, निर्जितेन्द्रियग्रामा, अरुन्धती, सती, अनुपमितमतिमती, विनयबीजक्षोणी पारि-काङ्क्षिणी।

स्वर्णं कनकं शोभनजलं च । दानेति, दीपमानोदकार्द्रानक्षत्रयुक्तेत्य-र्थोऽन्यत्रबोध्यः । परस्वमन्यधनंपरस्वधोऽस्त्रविशेषः । कन्दः सस्यमूलंमेघश्च । गिरिजा उमा अभ्रकंतुगिरिजम् । जीर्णोद्धारो मणेस्टीकाऽपि । सरले-त्यादयस्तद्भेदाः । रक्षितास्थापिताऽपि, जातिरसदुत्तरम्, प्रामाण्यं प्रमा-वृताऽपि, मद्दत् विष्णु, श्रुतिर्निरपेक्षोरवः श्रुतिलिङ्गादीनांपूर्वपूर्वस्यप्राबल्यं मीमांसासिद्धान्तः, आर्थभावनाप्रवृत्तिः धनभावनाच, विवर्तमानं विशेषेण-वर्तमानं विवर्तरूपंच, । प्रत्याहारोयोगाङ्गम्, सदिति प्रकृतेविशेषणानां बहुव्रीहिवदितः कर्मधारयः, पत्रानुकूलादयोऽलङ्काराः । विलक्षो निर्लज्ज वितीर्ण लक्षाच, कौलीनोऽपवादः । अप्रसुधा अवनेऽमृतस्वरूपा, प्रसन्ना-सुरा, अगुरुराजार्हम् शीतकाऽलसा, दशमीस्था क्षीणरागा, निर्यातनंदा-नम्, वृसीव्रतचर्यासनविशेषः । कुहना दम्भचर्या शौण्डका आमिषाशिनी, रुशती अकल्याणीवाक् पारिकाङ्क्षिणी तपस्विनी ।

यस्या विशेषेणलिखितं स्यादतिपतेदाम्नायचतुष्टयं महाभारतं च पवित्रचारित्रम् । यदीयसमज्ञाशुभ्रांशु-समुदये विकसन्ति सतां स्वान्तसारसानि, उन्मिष-न्ति च पुरातनीनामपि सतीनसन्ततीना मयशस्त मांसि समन्ततसान्द्राणि । यस्या यशसासदृशता-मप्यनासादय दालोकयन्ती दिगङ्गना निचुलयति कुतुकिनी पुराऽतिशयेनविशदयितुं सिन्दूरमेदुरित-मपि स्वादर्शमिन्दुमण्डलम् । याम्बिकापदाम्बुजन्म-नोः प्रजनेमनमनजपन्तीं निपवनप्रदीपमप्यतितरां

त्रपातोयनिधौ निपातयन्ती मपघनैर्घनध्यानास्पन्द-
मानप्रमोदवाष्पासारवर्षिनयनकमलां, कलकलकला-
पेनाप्यनपनेयसमाधिमधिगच्छतां योगिनामपि
मन्दाक्षमार्छन्ति चक्षूंषि । यस्या स्सौमनसस्रवन्ती-
वीचिविसरशुचौ यशसि शरीरशेमुषी, न विनाशिनि
मांससन्निवेशे । या पयांसीव पश्यति स्वापतेयानि
प्रादेशनेषु, यदा पन्नकाञ्चनोऽकिञ्चनोऽपिकाञ्चन-
शोभां विभ्रन्वन् यदीययशोभरं विभरांबभूव। या प्रति
वासरमाशयति सहस्राणिभूसुराणाम् । या मङ्गनया
समं समुद्गायन्ति गृहेगृहे सानुरागमग्रजन्मानः ।
यया स्वकीयकीर्तिकदम्बकेन साकमजय्यीणि प्रतिष्ठा-
मनायिषत सद्मानि देवतानाम् । या पदारविन्ददा-
नादनुकम्पितयादोलिकया देवदर्शनायगच्छन्तीदिक्षु
भिक्षुकानदापयतद्रव्याणि दयाभिः । सेय मवगाहते
स्म त्रिजगतीवन्दितेनाऽपि त्रिपुरारातिना शिरसा-
विधृतां, प्रतीततीव्रतरतपः प्रीततया भगीरथरथानु-
यातां, तर्पणवितीर्णासिततिलततिलसितशीततोयां,
सुकृतिकलापकल्पितकुटीरकूलां, मज्जनंकलयन्तीनां
( कुर्वतीनां ) कामिनीनां कुचकलसकुङ्कुमेन, लो-
चनकमलकज्जलेन हृदयहारिहरिचन्दनद्रवेण वदन-
विधुविशेषकेणच शवलीकृतविमलवारिकां, दुर्गति-

गिरिदारिकां, कलुषायकुप्यन्तीमिव कम्पमानकमलकलेवरां, यमभटान् हसन्तीमिव हिण्डीर कपटेन, शिशिरादिव कृशतामुपाश्रितां, प्रियसागरेणसङ्गतिं शीलयितुमिवानुरागेण गृहीतवेगां, क्षितिपतिकरद्वयीमिव प्रदर्शितपृथुरोमरूपां, साधुसरस्वतीमिव विशदाशयां, बृहदारण्यक श्रुतिमिव उपनिषद्वरां, नरनाथनारीमिवनदीनां, त्रिपथगामपि अनन्तपदप्रापिकां निम्नगामपि समुन्नयित्रीं, भ्रमाकुलामपि भ्रमभञ्जिनीं, भुवनोद्धारिकामप्यङ्गीकृतभुवनविग्रहाम्, अनङ्गारातिसङ्गतामप्यनङ्गतां नयन्तीं, पद्धतिमिव निर्वाणविश्राणनस्य, सरणिमिवसुरपुरप्रयाणस्य, मौक्तिकस्रजमिव भारतक्षितेः, प्रोत्तुङ्गरिङ्गत्तरङ्गभङ्गाहितचन्द्रचन्द्रोच्चयमरीचिसहचरचपलवीचिनिचयचन्दनाचितचारुनीलाचलां, हरिद्वारे हरिपदप्रसूततया क्रियमाणकौतुकासङ्गां गङ्गाम्। अहिमकरेऽधितिष्ठति मकरनलयमनल्पवारं चकारकल्पवासं प्रयागे। यस्मिन् वयस्ययेव मिलतिकलिन्दकन्यकया कवीनां संहतिरिवान्तः सारस्वतरसान् वहन्ती भगवती मन्दाकिनी, वालवीजवपनेनच प्रसवोभवतिकैवल्यस्य। हरिचरणसंचरणपवित्रितरजोव्रजेव्रजे च तपनतनूजा पुण्यपयः पावितपरिसरे कृतयुगारम्भइव यथाप्रथिते

सत्याश्रितेच, मेदिनीशसीमन्तिनीविग्रहइव ललितोल्लसितचित्राभरणशोभने, भरतानुशासनइव समुल्लासितरासके, क्वचिदद्भुततनूजन्मजननिजन्यप्रमोदजाताश्रुसम्पातिनयनजलजाभ्यां वसुदेवदेवकीभ्यामुपश्लोक्यमानस्य, क्वचिदासरंगसं कंसं विध्वंसितुमवतंसकृतवीरवेषस्य, क्वचित् वृषभानुतनुजया सरोषं सकटाक्षं वीक्षितस्य, क्वचित् सान्द्रमालिंगितस्य, क्वचित् परिदमितकालियपृदाकुपतिप्रेयसीभिः स्तुतिविषयीकृतस्य, क्वचिदवाप्तसंस्तवेनवल्लवकदम्बकेनाऽपि विहितस्तवस्य, केशवस्य, स्तवनेन, क्वचित् राधिके २ इति सप्रेमोदीरितागिरां निशमनेन, क्वचित् कृष्ण २ कृष्णेत्याकर्णनेनाकलयां चकार परां प्रीतिम् ।

कमलं जलम् । उपनिषत् धर्मः वेदान्तश्च, निषद्वरोजम्बालः । नदीना सरिच्छ्रेष्ठा, अदीनाच । भ्रमः आवर्तः भ्रान्तिज्ञानंच । भुवनं जगत् जलंच, चन्द्रोच्चयः कर्पूरपुञ्जम् । मकरोराशिविशेषः, राधागोपी वैशाखश्चराधः । सत्या, सत्यभामासत्यम् अवितथम् । ललिता ललितंच चित्रा चित्रंचेतिच्छेदः । रासकइति रासक्रीडोपरूपकविशेषयोर्बोधकम् । आसरोराक्षसः, संस्तवः परिचयः ।

अनयाऽसकृत्[1] सौरोपरागे सहृदयइव सारस्वतरसा

---

1 'प्रसरत्' इति वा पाठः ।

श्रिते, प्राचीभागइव हरिपादपूताचले, कलेः काले-
ऽपि धर्मचरणयुगलोद्भासिते, नकुलकृतपराक्रमेऽपि
बहुवीरनागवलिते, कर्णकृत कायान्तः कवचवितरण-
प्रमुदितकेशवे निर्वाणक्षणक्षेत्रभूते, कुरुक्षेत्रे, वितनित-
विधिविहितकृत्ययाऽतितमां समप्रानिषत द्विजन्मानो
दानैः । गिरिशप्रेयसीमित्युत्तरगामिभिस्तरङ्गैस्सङ्ग-
तयागङ्गयाऽऽलिङ्गितां, मुक्तिक्षितिरिति मुमुक्षुलक्षे-
ण लक्षितां, कैलासनगरीमिव भैरवरक्षितां, श्यामा-
मिव तारकाविकाशिकां, काशिकामाश्रित्य दृशोर्वि-
षयीकृतो विश्वेश्वरः । परितोऽर्चाय परिषदिपरितो-
षितश्च सञ्चयो विपश्चिताम् । अनयैव विन्ध्याभिधाने
धरणिधरे भगवतीसमाराधिता, साकेते सरयूस्रोतसि-
स्नातयासीतासहकृतो रामोऽवलोकितः । चित्रकूटगिरौ
गोदावरी अवगाहिता, वैद्यनाथस्सपर्ययाप्रसादितः
जगन्नाथोऽपिनयनपथातिथीकृतः । प्रातिदैनिका-
नेकजनभोजनसमुचितकुसीद फलान्यदीयन्तदेवद्वि-
जाय द्रविणानि तीर्थेषुतेषु । यवानां तिलानाञ्च
भूयसीराशीन्निराशीकृतविभासिशिखरप्रांशुताः, शर-
दाशनीयान् सपरिमलैः सर्पिरादिपरिकर प्रकरैर्म-
ण्डितान् तण्डुलानपीयमर्पयति विप्राय । गाङ्गे-

१ गाङ्गेनाभिसि वा पाठः । २ [illegible]

यशृङ्गालङ्कृतशृङ्गसङ्गतं, शृङ्गीकनकबन्धुर-स्कन्धबन्धं, रजतराजिराजितस्फुरितशफं परमपीव-रान् धरणितलामर्शिनोधवलिमाधिकान्, पयोधरान्, दधानं, धेनूनामजस्रं सहस्रमुत्सृजति। क्षमाभृतमिव प्रोच्छ्रितं, शममिवश्रितसज्जनं, दक्षिणनायकमिव वशीकृतवशं, सरोवरमिवोल्लसितपद्मकाननं, सावग्रहमपि शीकरासारकारकम्, अदूष्यमपिवरत्रानुबन्धिनं, तैमिरीमहङ्कृतिमपहरतेव हटितसंहननं सत्वर-विसृत्वरेण कालकान्तिजालकेन, अजगरभुजगगात्रेणेव गृहीतगौरवेण शुण्डादण्डेन पश्चिमसन्ध्यामिव सन्धारयन्तं, परिणतिललितलवलीफलकनितकोदण्ड-बदरालतारकार्तस्वरसारशृङ्खलित प्रतीकत्रिकरदद्वयं कदलीदलवदाचरितपृष्ठदेशं, विहितबृंहितोत्थापित-पृथुवेपथुपृथिवीमण्डलं, पार्श्वतद्युगललम्बमानवि-शङ्कट घण्टाट ङ्कारटङ्कपाट्यमानश्रुतिपुटीपटलं, हाट-कादिलुठितस्रगावगुण्ठित कठिनकण्ठदेशं, परिमेलि-ताधिकस्नेहदीप्तिगेहदेहमन्यमिव श्यामलिमानमाश्र-यन्तं, गौरादिरागरञ्जितातिविशालभालस्थलं, चरण च तुष्टयीचञ्चित चामीकरकृतकलकिङ्किणिकाकलापकणितकान्तम्, अहंयुतान्धतयेवमन्दमन्दगमनेन मानसम पहरन्तमवलोकमानानां, द्विगुणीकृतकमलरागगुटिका

वलीकिरणाकलितकर्णवर्णं, हैमहीरकमहामौक्तिकप्रवालजालजडितलम्बमानास्तरणादर्पणप्राप्तप्रतिविम्बकैतवेनजननिवहं वहन्तमिवपार्श्वभागयुगलेन, सिताभ्रशृणिश्रितमनाथासनं, जगतीगतगन्धग्रहणलुब्धतरसुखरमधुकरनिकरलोलश्यामलतमकपोलपालिसन्ततस्यन्दमान दानोदकामोदमेदुरितमेदिनीमण्डलं, दन्तावलं प्रत्यपादयदवदान्यावदान्यतान्यकृतोपमानस्थानप्रतीतानवरतबहुमानदानसमुद्रसन्दर्शितातन्द्रयशश्चन्द्रसान्द्रधरणिपतिशताऽधिभागीरथीप्रतीरम् ।
नर्मदामिव वेणीरमणीयां, ज्योत्स्नीमिव चन्द्रभूषणां, गणितविद्यामिव नक्षत्रमालाच्छुरितां, नूतनानुरागप्रक्रियामिव रचितविचित्रपत्रलेखां, स्रोतस्वतीमिव लावण्यसलिलस्य, प्रधानराजधानीमिव मन्मथपार्थिवस्य, प्राङ्गणप्रान्तसुरभीकरणदक्षयक्षकर्दमसम्भिन्नवर्तिकाभिरुत्सादितां, सुगन्धशुचिसलिलस्नापितां, महाघनाधिवासितकौशेयान्तरीयवञ्चत्काञ्चनकञ्चुकाञ्चिताम्, आस्थास्थापितस्थासकां, कङ्कतसशङ्कविन्यस्त प्रचुरतरवासरानुसारि परिमलललितमालतीप्रभृतिप्रसूनप्रसूतस्नेहसान्द्रीकृत शिखावलश्यामलविमलकेशपाशां, मृगमदामोदनिष्यन्दिनाविन्दुनाकश्मीरजविनिर्मितेन तमालपलाशेन विलसिता-

लीकां, कज्जलकलाशलाकाकलितलोचनोत्पला, हाटकघटितताटङ्कतटमिलितमेच कमुखमणिमतल्लिका मरीचिमालया शातक्रतवकार्मुकेणेव किर्मीरितवक्त्र-कान्तिम्, उज्ज्वलरसासारं सम्पादयितुमिवाभिनव नवग्रहाध्यासितां, कनककृतकेयूरकटककङ्कणकलाप किङ्किणिकातुलाकोटिहंसकपरिस्कृतकलेवरां, भाल-म्बिकोरस्सुत्रिकाहारलतानतां, परिस्पन्दमानचम्पक-प्रालम्बाम्, आपादितपरिणयप्रणयिरूपां, समुचिता-धिक शुक्लशुल्कक्रीतां, भ्रातृमतीं, कन्यकां, सत्कृत्य वरायानुरूपाय प्रदाय कृतकृत्येतिपदवीमवापत् ।

सारस्वतरसः सरस्वतीकुण्डजलं, वाणीरसश्च । हरिः कृष्णः सूर्यश्च, पादः पदं किरणश्च । अचलेतिभङ्गेन पृथ्वीपर्वतयोर्बोधकम् । धर्मः सुकृतं युधिष्ठिरश्च । नकुलः पशौपाण्डवेच विशेषः । वीरनागः बलवान्सर्पः वीरवरश्च । तारकेति, रामेतिमनोर्नक्षत्रस्यच बोधकम् । गाङ्गेयशृङ्गं प्रकृष्टकनकम्, शृङ्गीकनकम् मण्डनसुवर्णम् । सज्जना कल्पना, साधुश्च सज्जनः । वशाकरिणी कामिनीच । पद्मकाननं विन्दुजालकयुक्तमुखं कमलवनंच । अवगूढो वृष्टिप्रतिबन्धोऽवलोकटं च । अदूष्यं कक्ष्यारक्षितमनिन्दितं च । वरभाकक्ष्या । हटिवं राजितम् । शृणिरङ्कुशः । आसनं स्कन्ध देशः । वदान्यावाग्मिनी दानशौण्डा चारुवादिनी च । वेणीकेशबन्धः प्रवाहश्च । चन्द्रोभूषाविशेषइन्दुश्च । नक्षत्रमाला हारभेदः तारापरम्परा च । पत्रलेखा तिलकविशेषः पत्रलिपिश्च । यक्षकर्दमेति, कुङ्कुमागरु-

कस्तूरी कर्पूरं चन्दनं तथा । महासुगन्धमित्युक्तं नामतो यक्षकर्दम इति धन्वन्तरिः । वर्तिका गात्रानुलेपनी उत्पादनमुद्वर्तनम्, अन्तरीयमधोंऽशुकम् । स्थासकः चार्चिक्यम् । कङ्कतं केशमार्जनी । तमालपत्रं तिलकविशेषः । अलीको भालदेशः । उज्ज्वलरसो विमलजलं शृङ्गारश्च, नवगूढो भूषाविशेषः नवमितो गूढश्च अभिनवत्वं तत्र प्रसिद्धनवग्रहविपरीतफलकत्वाद्विशेषणम् । तुलाकोटिर्नूपुरः । मालञ्चिका स्वर्णैः उरस्सूत्रिका मौक्तिकैः कृता माला । प्रालम्बं कण्ठादृजुलम्बिमाल्यम् । शुकं शुल्कम् न्यायोपात्तमूल्यम् ।

दरभङ्गेत्यभिधानं दधाने पुटभेदने शर्वरीशमरीचिरुचिजालं चतुश्शालं प्रासादमयं सामवेदकोविदाय द्रविडजनपदाय विप्राय प्रायच्छत् । अनुगृह्णाच्च वाराणस्यां विश्वविद्यासदनसम्पादनाय सङ्कुचितसुरतरुस्तरुणकरुणया स्वर्णसहस्राणां वितरणेन पूर्णामेव जगतीम् । नैदाघप्रौढतमतपनातपसन्तानसन्तापितान् सन्तोषयति पीयूषरसातिशायिना शुचिश्यैतशिशिरेण पानीयशालिकासु कीलालेन किङ्करैः । विपुलोपलोपकृतसोपानावलीशोभिगभीरसुरभिक्षीरनीरसत्तीर--दीर्घिकाणां तेषु स्थलेषु खाननेन व्यपानयदपामनवापादापादितां तृषं जनिजुषाम् सत्वरं संस्कारयति स्म याः-स्साङ्गनिगमसागरपारगैरनुष्ठीयमानाभिश्चरणचतुष्ट--येन घटिताभिरिष्टिभिः । प्रावृषेण्यपुलिनिनीपरमोचयचञ्चल्यमानप्रविसारिपयः (वारि) प्रवाहैः, प्रलय-

पयोदपटलपयः पूरैरिव, प्रत्याययद्भिः पाथसामेव रूपिद्रव्यरूपतां, स्मृतिपदोपनीतपस्त्यपादपपूमुखैः, प्रयाणकर्मीकृतेषुस्थलेषु अविमपिहृढतया, पर्व्वतानपि प्रांशुभावेन परिहसन्तीश्शेतुसंहती स्सहस्रेणापिस्रोतस्वतीनामभिदेलिमा अवन्धयत् । प्रत्यतिष्ठिपदनन्यनिष्ठनिष्ठया निज धिष्ठानोपकण्ठं सौष्ठवपुषावपुषामनोहरे मन्दिरे मिलितविस्मयानामपि मर्मसुरचनकर्मणां विश्वकर्मसधर्मतामुपगतै धर्मिकैश्चारुचरितैः कारुभिर्यथा शर्मनिर्मायं निर्मापितेऽधिकुट्टिमं श्वेतमसृणैः परत्रच मानसनिकेतनानन्तिक माकारयद्भिः, दम्भोलिदम्भं स्तम्भयद्भिः प्रशस्ततरैः स विस्तरैः प्रस्तरशकलैः कलधौतकलसिका विलसितोदवयवे, रमणीयद्युमणिमैत्रीमुदमंशुकैतवेन वेदयाने, मन्दस्पन्दमानमारुतान्दोलिताना, मन्यदीयमञ्जुलता विजयमनुमापयन्तीनामिव, सौवर्णकिङ्किणीगणझणत्कार मधुरमृदुनिनादमोदित श्रुतिसन्ततीनाम्, अरुणिमरागरञ्जितनवीनचीनचैलवैजयन्तीना मन्विते शतेन, कालागुरुगुग्गुलसरलप्रभृतिवहलसौरभद्रव्यदहनधूमसुरभिते, हरेणापि हृदयगृहीताङ्घ्रिसरोरुहां, प्रावृषमिव प्रवृद्धपयोधरां, क्षितिपतियुवतिमिव विततशोणरसनां, प्रेमाभिमानिनीमिव ...कलहभां,

मत्यग्रपरिणीतामिव पितृनिलयवासप्रियाम् उदीचीं दिशमिव सद्ध्रुवोदयां, विभातवेलामिव पादपराग-शोभिसुमनस्समूहां, हरिदंशुकामपि विगलितावरणा-म्, ईशप्रेयसीमपि भवनाशिनीं, भोग्यलभ्यामपि भोगिभूषितां, पुरुषार्थचतुष्टयीं वितातरीतुमिव शय-चतुष्टयं श्रयन्तीं, गलद्रुधिरधारातिलम्बमानमुण्ड-मालकरालदर्शनां, दिव्यहालानिधानघूर्णमानलोहित-लोचनां, मुक्तमेचकचामरोच्चयाति चारुचिकुरचयाञ्चि-तचरणां, विश्वविरचनचुञ्चुना चिरेणानन्यचेतसा विरिञ्चिनाप्युदञ्चितां, चेतनाचेतनरक्षणचणेनाऽपि पुण्यचर्चितचरित्रचक्राशितेनाच्युतेनापि चिन्तयागो-चरीकृतां, शुचितरैरुचितरुचिनिचितै राजकीयोपचार-निचयैरनिशमर्चितां, चञ्चच्चञ्चरीकसञ्चयशोचिष्मतीं श्यामाम् ।

रूपित्रव्यं पृथिव्यादित्रयम् । हृदयंवक्षोमनश्च । पयोधरस्तनोघनश्च । रसनाजिह्वा काञ्चीच । रक्तः शोणितमनुरक्तश्च । पितृनिलयः श्मशानं तातगृहंच । ध्रुवोनिश्चित औत्तानपादिश्च वद्धयोवृद्धिः प्रकाशश्च । पादेति भङ्गः अन्यत्रपादपेति, सुमनइति देवपुष्पयोर्बोधकम् । हरित्वर्णविशेष आशाच । आवरणं वसनमज्ञानं च । भवश्शिवस्संसारश्च । भोगीभोगवान् सर्पश्च । शयोहस्तः हालामद्यम् । मुक्तः गलितबन्धनः कैवल्यवाँश्च

१. [illegible] मिति वा पाठः ।

चुञ्चुनाख्यातेन ॥

यदीयप्रात्यहिकचन्द्रेतराशातिंकक्कालिकोऽवधीरितवारिधरघनध्वनिरन्तरितखान्तरस्सन्ताड्यमानभेरीमृदङ्गाद्यनेकवाद्यनिनदस्समाक्रामतितमां दिक्चक्रवालम् । यामनुसमाअपचिन्वत्यमायां मनीषिशेमुषीसीमानमतिपतितैः, भुजगपतिगिरामप्यगोचरैः, पुरुहूतलोचनैरपि परिच्छेत्तुमशक्यैः प्रकारैरधिवाहुलवहुलदलम् । सत्कुरुते च यत्र निकुरम्बं कुटुम्बकानां कदम्बकं च कोविदाना मम्बरवसुविहापनैः । यया न्वर्थनामधेयं प्रसाध्यते निजसन्निधानमूर्त्या मनोरमेण मन्दिरेण प्रावृट् विटपिपटलमिवाविपल्लवं, रोहिणीचरणसरसीरुहमिवलाङ्गलिप्रणतं, मुरजादिवन्धविशेषलेखमिव असङ्कीर्णवर्णाकीर्णं, विलासिनीवपुरिव विभ्रमोद्दीपितं, चम्पककुसुममिव मधुपगतिवियोगितं, द्वारकापुरमिव उद्धवाच्युतं, सुरनगरमिव सर्वतश्श्रूयमाणगैर्वाणवाणीकमैरावतविलसितंच, आम्नायमिवसत्पदक्रमं, गगनमार्गैरिव विक्रमान्वितैः, सत्काव्यैरिव सरससरस्वतीप्रवणीकृतरसिकमानसैः, इक्षुकाण्डैरिवच्छेदक्षोभक्षीणैरपि सुरसमेवसन्ददानैः, दण्डैरिव भ्रमणेनापि परकीयकार्यकारकैः, पाटीरखण्डैरिव स्वा-

---

१ मति इति वा पाठः ।

कुतिकदर्थनेनापि परितापनिवारकैः, असतीनामर्थनाशतेनापितेनातरलितस्वान्तैः, अनास्वादितमातुलानीरसैः, अविनाशितराजीवजीवैः, साङ्गसङ्गीतसङ्गिनिगमवैज्ञानिक प्रतायमानश्यामागुणगानतानसमानन्दितमानसैः. दयितविजनैः, जनैर्निषेवितं, शुचिश्रोत्रियसंहतिसमावर्त्यमानसूक्तशतशब्दायमानं, संजप्यमान श्रुतिसंहतिसंहितं, प्रयतवैदिकदलनिवहविधीयमानातिरुद्रस्नपनीयदुग्धधाराधवलितवृषध्वजं, जनबहुलमपि विजनं, दूष्यदूषितमप्यजुगुप्सितम्, अनाकाशमपि (अतापनमपि) परिधिवलयितं, कामिनीवक्तूणेवसकर्णिकेन, रजनिकालेनेव कोकनदाकुलेन, रामानुजसम्प्रदायेनेवाशैवलेन, वैदूर्यवर्णेनाऽपि स्फटिकरुचिरेण, स्निग्धसैकतसन्ततलेन, मानसमपि सरस्सदासन्निहितलक्ष्मीकतया, विप्रगृह्यमाणामृततयाच विहसता, इतरसमसापेक्षसाधुता साधनीभूतयेवप्रतिपलंनूतनतयेवावभासितया यच्छ्याविशिष्टेन, व्याकोशकह्लारकमलमकरकपिशेन, विकचकुवलयवलयश्यामलेन स्फुटपुण्डरीकमण्डलपाण्डुना, निशायामुत्फुल्लकुमुदकदम्बकावदातेन, अन्तरवसीयमानविसलतासारेण, कासारेण, काशितं, सत्पुरुषोत्सवैरिवानेकधाकृतप्राचीपरिष्कारैः सुरसमज्याजित्वरैरिव चित्र-

शिखण्डिमण्डितैः, दाशरथिसैन्यैरिवसुखेन सुखेण-निषेवितैः, ऋषिभिर्मखप्रविष्टैरिवविष्टराधिष्ठितैः, वशिष्ठ-सदनप्रदेशैरिवसुरभिशोभमानैः पण्यमहिलाविरहितै-ऽपि गणिकाबहुलैः, वनदेवतां प्रमोदयितुमिव विशद-मकरन्दसन्दोहकल्पिता बस्तनधवलतरप्रविततवितानै रुपवनैस्समुरुचिरं लक्ष्मीपुरम् । यस्मिन् मूलोत्पाटनं कुशानां, न जनानाम्, बाचालताऽच्युतचरितवचन-वैचित्र्येषु, नान्यदीयनिन्दनेषु, रत्नसंवित्तिः साधु-संहतिषु, (श्रेणीषु) नशि ाशकुलेषु, वञ्चकताभूरि-मायेषु वृषदंशकता मार्जारेषु, छिद्रान्वेषिता विलेशये-षु, वंशच्छेदो निशान्तनिर्माणेषु, नलोकेषु, वात-वेगविक्षिप्तता रजसि, नवपुषि, शरीरशातता, शास्त्र-शीलनेन, नामयेन, सद्मसुश्यामलिमा होमधूमेन, न परिकर्मवैकल्येन ।

अविप्लवम् आपदोळवेनरहितम् सक्रिसलयंच । लाङ्गलीनारिकेरः बलदेवश्च ; विभ्रमः शोभाहावभेदश्च । उद्धवाच्युतम् चरसयेननच्युतम् उद्धवसाहस हरियुक्तं च । ऐरावतः नागरङ्गः इन्द्र गजश्च । सत्पदक्रमं साधुच पगवियुतं पदक्रमाभ्यां विकृतिविशेषाभ्यां सहितंच । विक्रमः पराक्रमः विहगगतिश्च । 'तेन, अनिर्वचनीयेन । मातुलानी मातुलप-त्नी विजयाच । राजीवोमीनमृगविशेषौ । विजनं विविक्तं विशिष्टजन-युक्तञ्च । दूष्यं निन्द्यं वसनं च, परिधिः परिवेषः यष्टीयतरुशाखावि-

शेषोऽपि । कर्णिका सरोजवीजकोशः कर्णभूषणंच । कोकनदेतिरक्तोत्पलं कोकपक्षिशब्दश्च । शैवकोजम्बालः शैवग्रहीताच । काश्मीशोभामहाराज्ञी च । धात्री आमलकी क्षिति रुपमाताच । चित्रशिखण्डी चित्रमृगः । धिषणपिता च । सुखेणः तमालः, कपिविशेषश्च । विष्टरोविटपीदर्भमुष्टिश्च । सुरभिः चम्पकः सुरधेनुश्च । गणिकावाराङ्गना युथिकाच । भूरिमायः शृगालः । वृषोवृषभः पुण्यंच । वंशः कुलं वेणुश्च ॥

यत्रच उपनयोपयमनकुशान् कुशाग्रमते ?, आहरश-मीसमिधः समिद्धद्युते ?, संयोजय सुमनांसि सुमनाः ? परिकल्पय पाटीरपङ्कपूरं पुरप्रणयिन् ?, पाटयकौशेय-पटं कृत्यपटो ?, आरचयक्षिप्रमक्षतमक्षतश्रेयाः ?, इत्येवं विधानि (तादृशानि) सर्वतः श्रूयन्ते निदेश-भाषितानि । अध्वरप्रवृद्ध धनञ्जयदाहभीत्येव य-देनांसिनैव पश्यन्तिदृशाऽपि । उपदेशपीयूषसम्पातैः पुरातनविद्याकल्पोलपगोपनाय यत्र निष्पादितोऽध्या-पनालयो विजयते, यस्मिन्नशनवसन पुस्तकाद्यनुचि-न्तनविधुरीकृतान् शासति परश्शतानपश्चिमचेत-नाञ्चिता विपश्चितश्छात्रान् । यतो दवीयसोऽपि देशादागत्य विद्यामादित्सव स्सानन्दमधीत्यलब्ध-जीविकाः परिपोष्यमाणपरिवाराः शास्त्रशारविचार-शीलाः प्रख्यापयन्ति प्रतिविषयमिदमीयां यशोरा-शिम् । वर्णनस्पृहणीयपवित्रविचित्रचरित्रासादनेना-

धरीकृतवधूजनाधरसुधामधुरतानां व्याहृतीनां योग्ये- समुन्मेषाद प्रयासेनैतया कृतार्थीकृताः कवयतां कलापाः। श्यामापदपयोजपूजनाय चिरायास्मिन्नेव पुरेनयन्तीसमयमियमियाय पुण्यश्लोकतयाजनतया स्वेष्टदेवतेव स्मरणीयतामुषसि। स्वस्वसमीहितं स्व- माप्नुवन्तोऽति सन्तोषेणसन्तो विहितसेवाद्देवादेत- दीयाभ्युदयं याचमानास्सकलककुभः कान्ताश्च श्राक लिताङ्गावरणैतदीयकीर्तिसिचयाः(कर्णालङ्कृतीकृत- राजतताटङ्ककीर्तयः) सुकृतसन्ततीस्सन्ततं विदधती- सतीशंततं सन्ततमनुभवन्ती पालयन्तीच निजान्व- वायोचितकरणीयमारजनीशतरणी राजतां धरणीतल इत्याशिषां राशिभिरिमामभितोवर्द्धयन्तीतिशम्॥

न्यायानुचिन्तनचयाञ्चितचेतसो मे
सम्भाव्यकाव्यकरणाभ्यसने श्रमस्य।
प्राथम्यमेतदधिगम्य विलोकमानः
सन्तोषमेष्यति मनीषिजनो विशेषम्॥ १ ॥

स्थूलान्यपि स्वरचिते रचकस्यनैव
प्रायेणहक्पथिकता मुपयन्ति यानि।
मानुष्यजन्मसुलभानवधानतायाः
संशोधयन्तु सुधियः स्खलितानि तानि॥ २ ॥

आस्वादितकादम्बरीप्रभृतिजातशातेन ।
अपिकृतिरेषा नवतया दृश्याकविजातेन ॥ ३ ॥
रसशहितंमितेन मिते (१९३९) विक्रमवत्सरे ।
श्रीबालकृष्णमिश्रेण काव्यमेतत्समापितम् ॥ ४ ॥

इति राजकीयसंस्कृतमहाविद्यालयाध्यापकमैथिल श्रोत्रिय श्रीबालकृष्णमिश्ररचिते लक्ष्मीश्वरीचरिते

❀ ॥ षष्ठोच्छ्वासः समाप्तः ॥ ❀

उपयमन कुशो वेणीरूपः कर्मकाण्डे प्रसिद्धः । शमीकिंशुकवृक्षः, पुनांति पापानि 'कल्पोऽपः कल्पलता, श्लोकोयशः । स्वंधनम्, शंतवं विस्तृतं कल्याणम् ॥ ० ॥ न्यायस्तर्कशास्त्रम् । आचितंव्याप्तम् । सम्भाव्यम् । आदरणीयम् अनवधानतायाः इति कारके हेतौ पञ्चमी । कादम्बर्यां प्राचीनत्वंतु प्रसिद्ध मेवेतिनतदनुपादानेदोषः । समासोक्त्यलङ्कारः ॥ रः रामः तस्यत्रित्वसङ्ख्यापोधकत्वम् । इनः पतिरिति शिवम् ॥ * ॥

इति राजकीयसंस्कृतमहाविद्यालयाध्यापकमैथिल–श्रोत्रिय–
श्री बालकृष्णमिश्रनिर्मिता निजनिर्मिते लक्ष्मीश्वरी
चरिते षष्ठोच्छ्वासटिप्पणी समाप्ता ॥ * ॥

---

१ रसरामाहिमांशु, महारामाहिमांशु, इति वा पाठः ॥

## कवि वर्णित खण्डवलाकुलानुक्रमणिका।

महाराज महेशठक्कुरः

म० गोपालः, म० अच्युतः, म० शुभङ्करः,

म० पुरुषोत्तमः, म० नारायणः, म० सुन्दरः,

लाला

म० महिनाथः, म० नरपतिः,

गुणानन्दः

म० राघवसिंहः

एकनाथः

म० विष्णुसिंहः, म० नरेन्द्र सिंहः

म० प्रतापसिंहः, म० माधवसिंहः,

म० छत्रसिंहः

म० रुद्रसिंहः, वासुदेवसिंहः

म० महेश्वरसिंहः, नेत्रेश्वरसिंहः, गुणेश्वरसिंहः,

जी.सी. आइ. ई. म० लक्ष्मीश्वर सिंहः, जी.सी. आइ. ई. के. पी. ई. महाराजाधिराज धर्मरत्नाकर श्री ५ रमेश्वर सिंहः

एतस्य धर्मपत्नी श्री ३ लक्ष्मीश्वरी देवी

म० कु० श्री २ कामेश्वर सिंहः, श्री २ विश्वेश्वर सिंहः

